कथं हि मायावादप्रतिपाद्यम्। नहि तन्निरूपयितुं शक्यते मायावादिना। तथाहि—यदेतद्ब्रह्मैक्यमात्मनस्तद्ब्रह्मात्मव्यतिरिक्तमात्मस्वरूपं वा। आत्मातिरिक्तं सत्यं चेत्स्यादद्वैतहानिः स्यात्। आत्मातिरेकेण वस्त्वंतरानभ्युपगमात्। आत्मनोऽनतिरेके सिद्धसाधनतापत्तिर्दोषः स्यात्। स्वयप्रकाशात्मस्वरूपप्रतिपादकस्यामानत्वं स्यात्।

हानेः स्वरूपातिरेके। अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धसाधनता। निर्विशेषत्वादात्मनो नानधिगतो विशेषः। सिद्धत्वात्स्वरूपस्य विषेषाभावाच्च नाज्ञानं कस्याचिदावरकम्। अनधिगतार्थगंतृ प्रमाणमिति च तन्मतम्। अज्ञानासंभवादेव तन्मतमखिलमपाकृतम्। मिथ्यात्वे

अज्ञातज्ञापकस्य मानत्वेनांगीकृतत्वात। ज्ञेयत्वादेवात्मनो मिथ्यात्वं स्यात्। ज्ञेयस्य शुक्तिरजतवन्मिथ्यात्वांगीकारात्। न च केनचिदाकारेण स्वयं प्रकाशमानोपि विशेषाकारेण मायावादप्रतिपाद्य इति वाच्यम्। निर्विशेषत्वेनांगीकृतत्वात्तस्य। आत्मनः स्वयप्रकाशस्याज्ञानासंभवान्नाज्ञानकल्पितोविशेषः शास्त्रप्रतिपाद्य इति वक्तुं शक्यते। न तु कथमज्ञायमानासंभवेनाज्ञानासंभवा-

त्माज्ञाननिवृत्यर्थो मायावाद इति वक्तुंशक्यत्वादित्यर्थः । ब्रह्मैक्यं आत्मातिरिक्तं सत्यं चेदद्वैतभंगः स्यादित्युक्तम् । तन्न । ब्रह्मात्मैक्यस्य मिथ्याभूतत्वादित्याशंक्य परिहरति ॥ मिथ्यात्वेचैक्यस्येति ॥ ब्रह्मात्मैक्यं हि वेदांतप्रतिपाद्यमंगीकृतं मायिना । तस्य मिथ्यात्वे वेदस्यातत्वावेदकत्वेनाप्रामाण्यं स्यात् । जीवब्रह्मणोरैक्यस्य मिथ्यात्वेन भेदस्य सत्यता स्यात् । परस्परविरुद्धयोरेकतरनिषेधस्यान्यतरविधिनियतत्वात् । अतो द्वासुपर्णेत्यादिजीवेशभेदवाक्यानुरोधेन तत्वमचैक्यस्यातत्वावेदकत्वमागमस्य स्यात् । सत्यता च भेदस्य । एवमेव प्रयोजनमपि निरस्तम् । स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात् । सीत्याद्यैक्यवाक्यमग्निर्माणवक इतिवद्गौणार्थमवगंतव्यमित्यर्थः । यथा जीवब्रह्मैक्यलक्षणविषयकत्वमपि निरूपायितुमशक्यत्वेन बाधितम् । तथा प्रयोजनमपि निरूपायितुमशक्यत्वेन बाधितमित्याह ॥ एवमेव प्रयोजनमपि निरस्तमित्यादिना ॥ यदेतत्साधनवैयर्थ्यात् न चात्माज्ञाननिवृत्तिर्मोक्ष इति वक्तुं शक्यते । आत्मनः स्वयंप्रकाशमानस्याज्ञानासंभवेन तन्निवृत्त्यसंभावात् । न सन्ना-

यत्रापि सद्सन्न सदसद्विलक्षणः। किं तु पंचमप्रकारोऽज्ञाननिवृत्तिरूपो मोक्ष इति यन्मायिनोक्तं तदप्यत एव निरस्तं भवति। सदसद्विलक्षणरूपचतुर्थप्रकाराज्ञानासंभवेन पंचमप्रकारस्याज्ञाननिवृत्तिरूपमोक्षस्य सुतरामसंभवादज्ञानविलक्षणयाऽत्माज्ञाननिवृत्त्या भाव्यम्। भावाभावयोर्भिन्नप्रकारत्वादिति सदसद्विलक्षणरूपाज्ञाननिवृत्त्याख्यमोक्षस्य पंचमप्रकारत्वं कल्पितं तदज्ञानासंभवे न संभवतीत्यर्थः। अत उक्तप्रकारेण मायावादे विषयप्रयोजनासंभवादसंभावितं प्रयो-

---

अज्ञानासंभवेन चतुर्थप्रकाराभावात्पंचमप्रकारतापि निरस्ता। विषयप्रयोजनाभावान्नैवाधिकारी च। तदभावादेव संबंधोऽपि। द्वाविमौ

---

जनमुद्दिश्यासंभावितविषयप्रतिपत्त्यर्थं तद्बुद्धिमानधिकारी च निरस्तः। अधिकारिविषयप्रयोजनानामसंभवादेषां साध्यसाधनभावरूपः संबन्धोपि निरस्तस्तदाह। विषयप्रयोजनाभावा? बाधितत्वान्न ब्रह्मात्मैक्यं वेदप्रतिपाद्यमित्युक्तम्। तर्हि किं वेदप्रतिपाद्यमित्यपेक्षितार्थं भगवद्वाक्येन साधयति ॥ द्वाविमौ पुरुषावित्यादिना ॥ अस्यार्थो नारायणश्रुत्योच्यते। ब्रह्मरुद्रा-

विश्वासार्थं भगवद्वेदव्यासवचनं महाभारताद्युक्तमुदाहरति ॥ नास्ति नारायणसममिति ॥ नास्ति नारायणसमं न भूतं न भविष्यतीत्यस्य वाक्यस्य सत्यत्वकथनेन रुद्रादेर्जगदुत्तमत्ववचनं पुराणादिगतं अन्यथार्थमिति सूचितम् ॥

इति मायावादखंडनटीका श्रीपद्मनाभभट्टाकारकविरचिता समाप्ता ॥

---

नास्ति नारायणसमंन भूतं न भविष्यति । एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहं ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं मायावादखंडनं संपूर्णम् ॥

---

अयं ग्रंथः कुंभघोणस्थानां मध्वविलास पुस्तकालयाधिपतीनां पंडित टी. आर्. कृष्णाचार्याणां तनूजेन टी. के. वेंकोबाचार्येण वाजपेययाजि वासुदेवदीक्षित खापेकर इत्येतैः शोधित पुस्तकानुसारेण मुद्रितम् । शाके १८५१.

दयः सर्वे शरीरक्षरणात्क्षराः ॥ श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः ॥ चेतनाचेतनस्यास्य राशेस्संशायकत्वतः ॥ कूटस्थ आत्मा स ज्ञेयः परमात्मा हरिः स्वयं ॥ क्षराक्षरात्मनोर्यस्मादुत्तमः स सदानयोः । पुरुषोत्तमनाम्नातः प्रसिद्धो लोकवेदयोरिति ॥ एतदर्थो विविच्य स्मृत्या समाख्यायत इति योज्यं ॥

---

पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । योमामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत । इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद्बुद्ध्वा बुद्धि मान्स्यात्कृतकृत्यश्च भारत । इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा

---



इंद्रियेभ्यः परा ह्यर्था इति ॥ एतच्छ्रुत्यर्थः पुराणग्रंथेनोच्यते ॥ देवेभ्य इंद्रियात्मभ्यो ज्यायांसोर्थाभिमानिनः । सोमवित्तपसूर्याप्पा अश्व्यग्नींद्रदस्रनवः ।

कदेवताः ॥ मनोभिमानिनो रुद्रवींद्रशेषास्त्रयोपि तु ॥ ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिस्सरस्वती । तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा । तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः । कश्चित्कुतश्चित् श्रेष्ठस्तु नास्तीति किमु सा कथेति । द्विद्व्येकदेवता इत्यनेन द्वयोः शब्दस्पर्शयोः सौपर्णी देवता । रूपरसयोर्द्वयोर्वारुणी देवता । गंधस्योमा देवतेत्युक्तं भवति । सर्वशास्त्रार्थत्वेन बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः। ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ इति विष्णोः पुरुषोत्तमत्वमेव सर्वशास्त्रार्थत्वेन भगवता श्रुत्या चाभिहितम् । इति सर्वज्ञमुनिना मायावादतमोऽखिलम् । निरस्तं तत्ववादेन सतां संशयनुत्तये । यद्विष्णोः सर्वोत्तमत्वं तद्भगवत्वाद्युक्तम् । तद्भगवत्कृतब्रह्मसूत्रेण द्रढयति ॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथाच दर्शयति ॐ इति ॥ वैदिकत्वेन मायावादस्यप्रकृतत्वेन सज्जनानां विष्णोः सर्वोत्तमत्वं वर्णितं न वेति संशयस्स्यात्तन्निवृत्यर्थं मायावादं निराकृत्य तत्ववादेन ब्रह्मेशानादिजगदुत्तमत्वं विष्णोः स्थापितं श्रीमदानंदतीर्थमुनिनेत्याह ॥ इति सर्वज्ञमुनिनेति ॥ उक्तार्थे दृढ-

विश्वासार्थं भगवद्वेदव्यासवचनं महाभारताद्युक्तमुदाहरति ॥ नास्ति नारायणसममिति ॥ नास्ति नारायणसमं न भूतं न भविष्यतीत्यस्य वाक्यस्य सत्यत्वकथनेन रुद्रादेर्जगदुत्तमत्ववचनं पुराणादिगतं अन्यथार्थमिति सूचितम् ॥

इति मायावादखंडनटीका श्रीपद्मनाभभट्टाकारकविरचिता समाप्ता ॥

नास्ति नारायणसमंन भूतं न भविष्यति । एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहं ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं मायावादखंडनं संपूर्णम् ॥

अयं ग्रंथः कुंभघोणस्थानां मध्वविलास पुस्तकालयाधिपतीनां पंडित टी. आर्. कृष्णाचार्याणां तनूजेन टी. के. वेंकोबाचार्येण वाजपेययाजि वासुदेवदीक्षित खापेकर इत्येतैः शोधित पुस्तकानुसारेण मुद्रितम् । शाके १८५१.

## ॥ अथ मायावादखंडनम् श्रीनिवासतीर्थीयसहितम् ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ श्रीरामं हनुमत्सेव्यं श्रीकृष्णं भीमसेवितं ॥ श्रीव्यासं श्रीमदानंदतीर्थसंसेवितं भजे ॥ प्रणम्ययादवाचार्यगुरूणां पादपंकजे ॥ व्याख्यास्ये दुर्गमां मायावादखंडनपंचिकाम् ॥ सर्वज्ञकल्पाः टीकाकाराः श्रीमज्जयतीर्थश्रीचरणाः श्रीमदाचार्यकृतस्य मायावादखंडनाख्यप्रकरणस्य टीकां कर्तुकामाः स्वचिकीर्षितग्रंथस्य

## ॥ अथ श्रीमज्जयतीर्थाचार्यकृता मायावादखंडन टीका ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । नरसिंहमसह्योरुप्रत्यूहतिमिरापहम् । प्रणिपत्य व्याकरिष्ये मायावादस्य खंडनं ॥

निर्विघ्नपरिसमाप्त्यर्थं श्रीमन्नृसिंहस्तवनरूपं मंगलं कृत्वा शिष्यशिक्षार्थं ग्रंथादावुपनिबध्नंतः स्वचिकीर्षितं प्रतिजानते ॥ नरसिंहमिति ॥ असह्याः प्रारिप्सितपरिसमाप्तिरूपेष्टविरोधित्वेन सोढुमशक्याः उरवः अल्पमंगलानिवर्त्याः बहुसंख्याकावा ये प्रत्यूहाः विघ्नाः । विघ्नोंतरायः प्रत्यूह इत्यमरः । ते सम्यग्ज्ञानविरोधित्वात्तिमिराणीव तान्यपहंतीति प्रत्यूहतिमिरापहः तम् । एतादृश-

दिति । व्यापकीभूतस्य आव्रियमाणस्याभावादित्यर्थः ॥ इति च तन्मतामित्यत्र चशब्दसूचितदोषमाह ॥ परार्थत्वादिति । परप्रवृत्तिनिवृत्त्युपयोग्यर्थप्रतिपादकत्वादित्यर्थः ॥ एको दोषः ॥ ननु गंतृशब्दस्य कर्त्रर्थकतृच्प्रत्ययांतत्वेन अवगतिकर्तृवाचकतया करणे इंद्रियादावसंभव इत्यत आह ॥ गंतृशब्देनेति ॥

व्याप्तं । नचाज्ञानस्य तदस्ति । तथाहि । किमज्ञानमात्मस्वरूपस्यावरणं स्यादुत तद्विशेषस्य । नाद्यः । तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् । न द्वितीयः । तदभावात् । तथाच व्यापकाभावाद्व्याप्यमावरणमपि न संभवतीति न तन्निवर्तकत्वेन शास्त्रस्यासिद्धसाधनत्वं भवतीति । अस्तु तर्हि सिद्धसाधनता शास्त्रस्य को दोष इति चेत् । परार्थत्वाच्छास्त्रस्य परसिद्धबोधनेऽनुपादेयत्वं स्यादित्येकः । अपरं चाह ॥ मूलं—अनधिगतार्थगंतृ प्रमाणमिति च तन्मतं ।

अवगतिसाधनमिति । अवगतिकरणमित्यर्थः । अर्थशब्देन तथाभूतार्थ उच्यते । तथाचानधिगततथाभूतार्थावगतिकरणं प्रमाणमिति लक्षणमभिप्रेत्य क्रमेण पदानां कृत्यं दर्शयति ॥ अनधिगतेतीत्यादिना ॥ स्मृत्यादीति ।

धेत्यादि । विविधसांसारिकदुःखदर्शनेनेत्यनेन नित्यानित्यवस्तुविवेकोऽभ-

प्रेयते। दुःखदर्शनेन विरक्तस्येत्युक्त्या नित्यानित्यवस्तुविवेकस्य वैराग्यसाधनत्वं सूचितमिति ज्ञातव्यम्। शमो भगवन्निष्ठबुद्धिमत्त्वं दम इंद्रियनिग्रहः 'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः'। इति भगवद्वचनात्। आदिपदेन 'शांतो दांत उपरतस्तितिक्षु' रित्यादिश्रुत्युक्तविषयालंबुद्धिमत्त्वादिरूपोपरतत्वादिसंग्रहः। अनेन साधनाध्यायार्थोऽभिप्रेत इति द्रष्टव्यम्। मोक्षस्वरूपे वादिनां विप्रतिपत्तेः स्वमते तन्निरूपणायोक्तं तन्निवृत्त्यै परमानंदावाप्तये चेति। आनंदस्य

क्षारिणस्तन्निवृत्त्यै परमानंदावाप्त्यै च सकलजीवजडात्मकात्प्रपंचात्परमार्थत

परमत्वं नाम दुःखासंभिन्नत्वं नित्यत्वं(चेति)वेति द्रष्टव्यम्। तथा च आत्यंतिकदुःखनिवृत्तिविशिष्टपरमानंदाविर्भाव एव मोक्ष इत्युक्तं भवति। अनेन फलाध्यायार्थोऽभिप्रेत इति ज्ञातव्यम्। निखिलगुणोदारत्वोपपादनाय सकलेत्यादिविशेषणम्। प्रपंचाभेदे तदनुपपत्तिरिति भावः। अनेन समन्वयाध्यायार्थो वर्णितः। तत्र ह्यपर्यायानंतशब्दानां महायोगवृत्त्या परब्रह्मणि समन्वयनिरूपणेन निखिलगुणोदारत्वस्य वर्णितत्वादित्यवगंतव्यम्। अत्र प्रपंचाद्भिन्न-

मित्येवोक्तौ मायावादिनापि प्रपंचाद्ब्रह्मणो व्यावहारिकभेदांगीकारात् तादृश-भेदवतो ब्रह्मणः अस्मन्मते विषयत्वापत्त्या तत्परिहाराय परमार्थतो भिन्न-मित्युक्तम् । भेदाभेदवादिनस्त्रिविधाः । जीवब्रह्मणोः संसारे केवलं भेदः मुक्तौ त्वभेद इति केचित् । अन्येतु संसारे भेदाभेदौ मुक्तौ त्वभेद एवेति । अपरेतु संसारे मुक्तौ च भेदाभेदावेवेति । मतत्रयेपि भेदः सत्योपाधिकृतः पारमार्थिक एवेति । तत्र संसारे परमार्थतोऽत्यंतभेदस्यापि कैश्चिद्भेदाभेदवादिभिरंगीकारा-

एवात्यंताभिन्नं निखिलगुणोदारं निरस्तसमस्तदोषं परंब्रह्म प्रतिपादयितुं सकल-श्रुतिस्मृतीनां तदुपकरणभूतब्रह्ममीमांसायाश्च प्रवृत्तिरिति तत्वम् । अपरेतु स्वतः

तद्व्यावर्तनाय एवेत्युक्तम् । तदर्थस्तु सर्वदेति । संसारे मुक्तौ चेत्यर्थः । संसारे मुक्तौ च भेदाभेद एवेति भास्करैकदेशिमतव्यावृत्त्यर्थं अत्यंतेत्युक्तमिति द्रष्टव्यम् । ननु युक्तिसमयादिभिः उक्तसमन्वये निरोधिते ब्रह्म दोषवदपि स्यादित्याशंकां परिहरतोऽविरोधाध्यायस्यार्थो वर्णितो निरस्तसमस्तदोषमिति । तत्र युक्त्यादी-नामाभासत्ववर्णनेन परब्रह्मणो निर्दोषत्वस्यैव वर्णितत्वादिति भावः ॥ तदुप-

करणभूतेति। श्रुत्यर्थनिर्णायकन्यायग्रथनात्मिकाया इत्यर्थः। 'धर्मे प्रमीयमाणे हिवेदेन करणात्मना। इति कर्तव्यताभागं मीमांसा पूरयिष्यती' ति वचनादिति द्रष्टव्यम्। अनेन श्रुतितन्मीमांसाशास्त्रयोः उक्तविशेषणविशिष्टं परब्रह्म विषयः निरुक्तो मोक्षःप्रयोजनं साधनचतुष्टयसंपन्नोधिकारी यथायोग्यं संबंध इत्युक्तं भवति। तत्वमिति सैद्धांतिकरहस्यं प्रमेयमित्यर्थः। एवं श्रुतितन्मीमांसाशास्त्रयोः स्वाभिप्रेतं विषयादिकं निरूप्य पराभिप्रेतं विषयादिकमाह ॥ अपरेत्वित्या-

परब्रह्मभूतस्यैव जीवस्याज्ञाननिमित्तं दुःखादि तदद्वैतज्ञानानि(ब्रर्हणीय)वर्तनीय-मित्यतोऽनर्थहेतोरस्यप्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वशास्त्रारंभइति वर्ण-

दिना। अज्ञाननिमित्तं ऐक्याज्ञाननिमित्तम्। निबर्हणीयं विनाश्यम्। अनर्थ-हेतोः दुःखाद्यनर्थहेतोः। अस्य अज्ञानस्य प्रहाणाय विनाशायेत्यर्थः ॥ आत्मै-कत्वेति ॥ आत्मनः जीवस्य यद्ब्रह्मणा एकत्वं ऐक्यं तस्य या विद्या यज्ज्ञानं तस्य प्रतिपत्तये प्राप्तय इत्यर्थः ॥ सर्वशास्त्रेति ॥ श्रुतितन्मीमांसाशास्त्रेत्यर्थः। तथा च जीवब्रह्मैक्यं विषयः अज्ञाननिवृत्तिः प्रयोजनं तत्कामोऽधिकारी

यथायोग्यं संबंध इत्युक्तं भवति। परममंगलं परममंगलरूपम्। अखिलस्याप्यज्ञानकल्पितत्वोक्तौ ब्रह्मचैतन्यस्याज्ञानकल्पितत्वं प्रसज्ज्येत। अतो व्याचष्टे ॥ चैतन्यमात्रेति। मात्रशब्दः केवलार्थः ॥ अज्ञानकल्पितमिति यन्मतमिति ॥ अत्र मध्यमपदलोपी समासः। अज्ञानेत्यनंतरं परिकल्पितशब्दस्य लोपांगीकारात्। अज्ञानेन परिकल्पितं अज्ञानपरिकल्पितं तच्च तत् अखिलं

यंति। तन्मतमपाकृत्य स्वमतं समर्थयितुमिदं प्रकरणमारभमाणो भगवानाचार्यः परममंगलं नरसिंहस्तवनमादावाचरति॥ **मूलं—नरसिंहोऽखिलाज्ञानमतध्वांतदिवाकरः। जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥** अखिलं चैतन्यमात्रातिरिक्तं अज्ञान(परिक)कल्पितमिति यन्मतं तदेव ध्वांतमिव सम्यग्ज्ञान-

च अज्ञानाखिलमिति भाव्ये विशेष्यभूताखिलपदस्य पूर्वनिपातमंगीकृत्य 'विशेषणं विशेष्येण बहुल' मित्यत्र बहुलग्रहणाद्विशेष्यस्यापि विशेषणेन समासांगीकारात्। अखिलाज्ञानमिति मतं अखिलाज्ञानमतं तदेव ध्वांतमिव अखिलाज्ञानमतध्वांतं तस्य दिवाकर इव। नन्वाभिभवार्थस्य जयिधातोः सकर्मकत्वस्य ढेव-

दत्तः शत्रून् जयतीत्यादौ दर्शनेनात्र कर्मानुक्तेर्न्यूनतेत्यतो नात्र जयिधातुरभिभवार्थः किंतु उत्कृष्टत्वेन सत्तार्थकः । तस्मिन्नर्थे स धातुरकर्मक एव । अतो न तदनुक्तिदोष इत्याशयेनाह ।। **जयतीति** ।। अत्र नियामकमाह ।। **तथाचोक्तमिति** ।। जि जय इति धातोः जयाभिभवयोर्वृत्तिरस्तीत्यर्थः ।। अभिभवः तिरस्कारः । कोसावाद्योऽर्थ इत्यत आह ।। **उत्कर्षप्राप्तिरिति** ।। **विशेषण-**

प्रतिरूपत्वात् । तन्निरसने दिवाकार इव । जयत्युत्कृष्टो वर्तते । तथा चोक्तम् । जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः। उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मक इति । सत्त्वं ज्ञानसुखशक्तीनां विशेषणम् । ज्ञानस्य यथार्थत्वं(सत्वं) सुखस्य दुःखासंभिन्नत्वम् । शक्तेरप्रतिबद्धता । ताभिः पयोनिधिरिव । पयोनिधिः

**मिति** । ज्ञानं च सुखं च शक्तिश्च ज्ञानसुखशक्तयः ।। सत्यश्च ताः ज्ञानसुखशक्तयश्च ताभिरिति विग्रहो द्रष्टव्यः ।। इत्यत **इति** ।। तद्धदस्यापि परिमितत्वशंकापरिहारायेत्यर्थः ।। **विशिनष्टीति** ।। अमितत्वं नृसिंहस्य विशेषणं दत्तामित्यर्थः ।। ततश्च अमितश्चासौ सज्ज्ञानसुखशक्तिपयोनिधिश्चेति विग्रहो

द्रष्टव्यः ॥ ननु विशेषणांतरं विहाय एताभ्यामेवविशेषणाभ्यां स्तवने किं प्रयोजनमित्यत आह ॥ द्विविध इति । खल्विति वाक्यालंकारे ॥ प्रसंजितेति । प्रसक्तेत्यर्थः ॥ इष्टसंपादनेति ॥ तं यथा यथोपासते तदेव भवतीति श्रुतेरिति भावः ॥ तन्मीमांसाभिरिति । तदर्थनिश्चायकन्यायग्रथनात्मिका-

परिमितो भवतीत्यतस्तमामितत्वेन विशिनष्टि । द्विविधः खलु पुरुषार्थोऽनिष्टनिवृत्तिरिष्टप्राप्तिश्च । तत्र अखिलेति मायावादादिदुर्मतप्रसंजितमिथ्याज्ञानाद्यनिष्टनिवर्तकत्वेन नरसिंहस्तुतिर्विहिता । अमितेति सम्यग्ज्ञानादिसमस्तेष्टसंपादनसमर्थत्वेनेति ॥ अखिलाज्ञानमतं ध्वांतसममित्येतदसहमान आह। जीवब्रह्मणोरेकत्वं हि श्रुतितन्मीमांसाभिस्तात्पर्यतः प्रतिपाद्यते । न चैतच्चैतन्याति-

भिरित्यर्थः ॥ एवमुत्तरत्रापि द्रष्टव्यं ॥ न चैतदित्यादि । आज्ञनपरिकल्पितत्वरूपमिथ्यात्वाभावे चेश्वरनिष्ठसार्वज्ञ्यादेः जीवनिष्ठदुःखादेश्च सत्यत्वापत्त्या विरुद्धधर्माधिकरणत्वेन जलानलवत् जीवेश्वरयोः भेद एव स्यादिति भावः ॥ कथमेवमुच्यत इति ॥ अखिलाज्ञानमतंध्वांतसमामिति कथमुच्यत इत्यर्थः ॥

न चैतदिति ॥ ऐक्यप्रतिपादकत्वमेव नास्ति। तथा अप्रतिभासादिति भावः। ननु कथमप्रतिभासः। ऐक्यपरतया श्रुतितन्मीमांसाशास्त्रं व्याख्यास्यामीति चेत्तत्राह ॥ तत्परतयेति ॥ विषयीभूतमिति ॥ धर्मिभूतमित्यर्थः ॥

रिक्तस्याखिलस्याज्ञानकल्पिततया विनोपपद्यते। तत्कथमेवमुच्यत इति। मैवं। स्यादेतदेवं यदि जीवब्रह्मणोरैक्यप्रतिपादकत्वं वेदतन्मीमांसयोरुपपन्नं स्यात्। न चैतदस्ति। तत्परतया व्याख्याने वेदादेरनारंभणीयत्वप्रसंगात्। तत्कथमिति तत्राह॥ मूलं—विमतमनारंभणीयम्। अन्यथाप्रतिपादकत्वात्। यदित्थं तत्तथा यथा संप्रतिपन्नम् ॥ विमतमारंभणीयत्वानारंभणीयत्वाभ्यां विमतिविषयीभूतं श्रुतितन्मीमांसाशास्त्रम्। शास्त्रमनारंभणीयमित्येवोक्ते बौद्धादिशास्त्राणामनारंभणीयत्वस्य परेणाभ्युपगतत्वादिष्टापादनमेतत्स्यात्। तर्हि वेदादीत्येवोच्यताम्। मैवम्। विमतिग्रहणेन निराश्रयत्वादिदोषपरिहार-

निराश्रयत्वादिदोषेति। आश्रयासिद्ध्यादिदोषेत्यर्थः। आदिपदेन सिद्धसाधनत्वाप्रसिद्धविशेषणत्वयोर्ग्रहणम् ॥ सूचितत्वादिति। यदि वियदा-

दिकमेव न स्यात्तर्हि आरंभणीयत्वानारंभणीयत्वाभ्यां विमतिः किमाश्रया स्यात् किंधर्मिणीस्यात् कुत्र स्यादिति यावत् । यदिवाऽनारंभणीयत्वं सिद्धमप्रसिद्धं वा स्यात्तर्हि आरंभणीयत्वानारंभणीयत्वाभ्यां कथं विमतिः स्यात्। एकस्याः कोटेः सिद्धत्वादप्रसिद्धत्वाच्चेत्यर्थः। अस्ति चेयं तस्मान्न निराश्रयत्वादीति विमतग्रहणेन सूचितमित्यर्थः ॥ आपाद्यवैकल्यादीनि ॥ आदिपदेनाश्रयहीनत्वग्रहणं ॥

स्यापि सूचितत्वात् । एवमापाद्यवैकल्यादिदोषपरिहारसूचनाय यथा संप्रतिपन्नमित्युक्तम्। अन्यथा यथा बौद्धादिशास्त्रमिति ब्रूयात् । नन्वनारंभणीयत्वं नामाप्रणेतव्यत्वं वा अश्रोतव्यत्वादिकं वा । आद्ये त्विष्टापादनम् । वेदस्याप्रणेतव्य-

दोषेति ॥ दृष्टांतदोषेत्यर्थः ॥ सूचनायेति । वक्ष्यमाणरीत्या आपाद्यमनारंभणीयत्वं बौद्धशास्त्रे न स्यात् । तदा केन धर्मेण संप्रतिपत्तिः स्यात् । यदि बौद्धशास्त्रमेव न स्यात् तर्हि आवयोरनारंभणीयत्वेन संप्रतिपत्तिः कुत्र स्यात् । अस्ति चेयं तस्मान्नापाद्यवैकल्यादीति संप्रतिपन्नग्रहणेन सूचितमित्यर्थः ॥ अश्रोतव्यत्वादिकमिति । अत्रादिपदेन अनुपादेयत्वग्रहणं ॥ अप्रणेतव्य-

त्वादिति । अपौरुषेयत्वादिति भावः ॥ दर्शनादिति ॥ तथाच आपाद्यैक्य-
ल्यमिति भावः । उपादेयत्वस्यापि दर्शनादित्यपि द्रष्टव्यं । ननु विमतमनारं-
भणीयमिति वेदतत्मीमांसाशास्त्रस्यानारंभणीयत्वसाधने भवतामपसिद्धांतप्रमाण-
बाधौ स्यातामिति चेत्तत्राह ॥ स्यादितीति । तथाच दूषणानुमानत्वान्न तत्रा-

त्वात् । न द्वितीयः । बौद्धादिशास्त्रश्रवणस्यापि दर्शनात् । मैवम् । प्रेक्षावदु-
पादेयत्वाभावस्य विवक्षितत्वात् । स्यादिति प्रतिज्ञावाक्यशेषः । तथाच यदि
वेदादिकं जीवब्रह्मणोरैक्यप्रतिपादकं स्यात्तदाऽनारंभणीयं प्रसज्ज्येतेत्युक्तं
भवति । आपादकमेवान्यथा प्रतिपादकत्वादित्यनेन हेतुवाक्येन विव्रियत
इत्यदोषः । तच्चोत्तरत्र प्रदर्शयिष्यामः । अथवा वेदतन्मीमांसादिकं ऐक्यपरतया

पसिद्धांतादिकं दोष इत्याशयः । यथोक्तं । अतो न दूषणेऽपसिद्धांतादीति ॥
नन्वेवमैक्यप्रतिपादकत्वरूपापादकस्य बहिरेवोक्तौ अन्यथाप्रतिपादकत्वादिति
हेतुवाक्यस्य वैयर्थ्यरूपदोषः स्यादिति चेत्तत्राह ॥ आपादकमेवेति ॥ जीवब्रह्मै-
क्यप्रतिपादकत्वरूपापादकमेवेत्यर्थः । कथं विव्रियत इति चेत्तत्राह ॥ नचेति ॥

विवरणमित्यर्थः । विवरणप्रकारमिति यावत् ॥ उत्तरत्रेति ॥ ननु यद्यद्वैतपर-मित्यादिना ग्रंथेनेत्यर्थः । एवं दूषणानुमानत्वमभिप्रेत्य व्याख्याय इदानीं साधनानुमानत्वमभिप्रेत्यापि व्याख्याति ॥ अथचेत्यादिना ॥ नन्वैक्यपर-श्रुतितन्मीमांसाशास्त्रानारंभणीयत्वसाधनस्यैव संगतत्वेन मायावादिशास्त्रानारं-भणीयत्वसाधनं कर्णे स्पृष्टे कटिं चालयतीति न्यायमनुसरतीत्याशंकापरिहारा-

व्याकुर्वन्मायावादिप्रणीतं शास्त्रमेव पक्षीकृत्य तस्यानारंभणीयत्वं वेदादेस्तत्पर-त्वनिरासाय साध्यते । कथमन्यथाप्रतिपादकत्वं विमतस्य शास्त्रस्येत्यत आह ॥ मूलं—नहि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे ॥ अन्यथाप्रतिपादकत्वं ह्य यथार्थप्रतिपादकत्वं । ब्रह्मात्मनोरेकत्वंच शास्त्रविषयतया परस्याभिमतं न

योक्तं ॥ वेदादेस्तत्परत्वनिरासायेति ॥ अत एवोक्तमैक्यपरतया व्याकुर्व दिति ॥ तथाच तस्यानारंभणीयत्वसाधने वेदादेर्जीवब्रह्मभेदपरत्वमेव सिध्यति । ऐक्यपरत्वोपपादकोपायाभावादिति भावः ॥ कथमिति । तथाच स्वरूपा-सिद्धिरिति भावः । शास्त्रविषयतया शास्त्रप्रतिपाद्यतया । यदुक्तं तच्चोत्तरत्र प्रदर्शि-

यिष्याम इति तत्प्रदर्शयितुं शंकते ॥ नन्विति ॥ आपादकस्य अद्वैतपरत्व-रूपस्य ॥ एतदेवेति ॥ अन्यथाप्रतिपादकत्वादित्येतदेवेत्यर्थः ॥ दृष्टांतानुपपत्तिरिति ॥ बौद्धशास्त्रे ब्रह्मैक्यप्रतिपादकत्वरूपोपपादकाभावात्साधनवैकल्यमित्यर्थः ॥ उपपादनानुपयोग इति ॥ कथं ब्रह्मात्मैक्यप्रतिपादकत्वं विम-

तत्परमार्थभूतं । अतोन्यथाप्रतिपादकत्वं सिद्धं । ननु यद्यद्वैतपरं शास्त्रं स्यात्तदानारंभणीयं प्रसज्ज्येतेति प्रसंगोक्तावापादकस्योक्तत्वात्पुनर्हेत्वभिधानं व्यर्थं स्यात् । न चैतदेवापादकाभिधानमिति वाच्यं । तथासत्यन्यथाप्रतिपादकत्वादित्यस्य ब्रह्मात्मैक्यप्रतिपादकत्वादित्यर्थः स्यात् । तथाच दृष्टांतानुपपत्तिः । नहि ब्रह्मात्मैक्यस्येत्युपपादनानुपयोगोऽसंगतत्वं चेति । मैवं । अभिप्रायसद्भा-

तस्य शास्त्रस्येति शंकायां न हि ब्रह्मात्मैक्यस्य याथार्थ्यमित्युपपादनानुपयोगरूपासंगतिरित्यर्थः । दृष्टांतानुपपत्तिसमुच्चयार्थश्चशब्द इत्यवगंतव्यं । यद्वा । ननु कथमैक्यप्रतिपादकत्वं विमतस्य शास्त्रस्येत्येवं शंकायां न हि ब्रह्मेतिवाक्यं प्रवृत्तमिति योजनायां संगत्यभावेपि प्रकारांतरेण संगतिं वक्ष्यामीति चेत्तत्राह ॥

असंगतत्वं चेति ॥ निमित्तनैमित्तिकभावस्येति ॥ प्रयोज्यप्रयोजकभावस्येत्यर्थः । अद्वैतस्य शास्त्रार्थत्वं निमित्तं प्रयोजकं अनारंभणीयत्वं नैमित्तिकं प्रयोज्यं । तद्भावस्यास्फुटत्वादित्यर्थः तथाचाप्रयोजकत्वमित्याशयः ॥

वात् । तथाहि । यद्यद्वैतमेवशास्त्रार्थः स्यात्तदा शास्त्रमनारंभणीयं स्यादित्युक्ते निमित्तनैमित्तिकभावस्यास्फुटत्वात्कथमित्याकांक्षायामन्यथाप्रातिपादकत्वादित्युक्तम् । यदि शास्त्रार्थोऽद्वैतंस्यात्तदा शास्त्रमन्यथाप्रातिपादकं स्यात् । ततश्चानारंभणीयं प्रसज्ज्येतेति । अद्वैतस्यैव शास्त्रार्थत्वे शास्त्रस्यायथार्थप्रतिपादकत्वं कथमित्यतो न हि ब्रह्मात्मैक्यस्येत्यभिहितं तत्रोपपत्तिस्तत्पक्ष इति । ऐक्यमेव शास्त्रार्थश्चेद्ब्रह्मातिरिक्तं सर्वमपरमार्थभूतं स्यात् । ऐक्यं च ब्रह्मव्यतिरिक्तत्वादपरमार्थभूतं । तत्प्रतिपादकं च शास्त्रं कथमन्यथाप्रातिपादकं न भवेदिति ।



कथमिति । आपादनं कथमित्यर्थः ॥ ततश्चेति ॥ अन्यथाप्रतिपाकत्वेनानारंभणीयत्वरूपे द्वितीयतर्के संप्रतिपन्नमित्युक्तं बौद्धशास्त्रमत्र दृष्टांत इत्यवगंतव्यं ॥ तेनैवेति ॥ ब्रह्मस्वरूपातिरिक्तेन परमार्थमता ऐक्येनैवेत्यर्थः ॥ द्वैतापत्ते

रिति ॥ द्वितीयसत्यवस्तुसद्भावापत्तेरित्यर्थः ॥ अद्वैतपरं सत्यभूतद्वितीयवस्त्वभावपरं । स्वोक्तार्थे खंडनकारसंमतिमाह ॥ यथाहेति । तच्चाद्वैतं ब्रह्मैवस्यादित्यन्वयः । कुतः यतोऽस्मदुक्तं प्रमेयं ब्रह्मैवेदं सर्वमिति श्रुत्यर्थेन सहै-

अथ ब्रह्मात्मैक्यं तत्स्वरूपातिरिक्तमपि परमार्थसदंगीक्रियते तदा तेनैव द्वैतापत्तेरद्वैतपरं शास्त्रमित्यस्य हानिः स्यादित्याह ॥ मूलं—अद्वैतहानेः स्वरूपातिरेके । ब्रह्मात्मैक्यस्येति वर्तते । याथार्थ्ये सतीति शेषः । स्यादेतदैक्यं परमार्थसदेव किंतु ब्रह्मस्वरूपानातिरिक्तमेव । यथाह । तच्चाद्वैतं ब्रह्मैवेदं सर्वमिति श्रुत्यर्थेन सहैक्यमापन्नं हि ब्रह्मैव स्यादिति । तथाच कथं तत्प्रतिपादकं शास्त्रमयथार्थप्रतिपादकं स्यादित्यत आह ॥ मूलं—अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धसाधनता ॥ शास्त्रस्येति शेषः । यद्यद्वैतं ब्रह्मस्वरूपा-

क्यमापन्नं प्राप्तं । अस्माभिरैक्यस्य ब्रह्मात्मकत्वमुच्यते । श्रुत्याच सर्वस्य ब्रह्मात्मकत्वमभिधीयते सर्वमध्ये चैक्यं पतितमिति तस्यापि ब्रह्मात्मकत्वं प्राप्तं । तथाचास्मदुक्तं प्रमेयं श्रुत्युक्तंचप्रमेयमेकमेव जातमित्यर्थः । तथाचा-

स्मदुक्तप्रमेयेश्रुत्यानुकूल्यमप्यस्तीति भावः ॥ **बोध्यस्येति** ॥ श्रुतिबोध्यस्य जीवस्येत्यर्थः ॥ **नित्यसिद्धत्वादिति** । मामहंजानामीति साक्षिप्रत्यक्षेणेत्यर्थः । तदेवोपपादयति । **स्वाविषयप्रकाशत्वमिति** । परेण च नैतादृशं

नतिरिक्तं स्यात्तदा शास्त्रस्य सिद्धार्थबोधकत्वं प्रसज्ज्येत । बोध्यस्यात्मनो ब्रह्मस्वरूपत्वात्तस्यच स्वप्रकाशत्वेन नित्यसिद्धत्वात् । अतः सिद्धसाधनतापरिहारायैक्यस्य स्वरूपातिरेकेंगी(कार्येऽन्य)क्रियामाणेऽन्यथाप्रतिपादकत्वमेवेति । अयं च दोषः स्वमतरीत्यैवोक्त इति मंतव्यं । स्वाविषयप्रकाशत्वं स्वप्रकाशत्वमितिस्वमतेंगीकारात् । पररीत्या तु स्वप्रकाशत्वादात्मनः शास्त्रस्याप्रतिपादकत्वं स्यात् । अवेद्यत्वं स्वप्रकाशत्वमित्यंगीकारादिति दूषणं द्रष्टव्यं । ननु स्वप्रकाशतयाऽऽत्मस्वरूपस्य सिद्धत्वेप्यद्वैतादिविशेषाकारेणानाधिगतत्वान्न शास्त्रस्य सिद्धसाधनत्वादिकं । यथा खलु भवतां गुणगुणिनोरभेदेपि गुणिनः स्पर्शनेनो-

स्वप्रकाशत्वमंगीकर्तुं शक्यं विशेषानंगीकारेण कर्तृकर्मत्वविरोधादिति भावः ॥ **अद्वैतादिविशेषाकारेणेति** । अद्वैतरूपः कश्चन विशेषाकारः तेन रूपेणेत्यर्थः ।

सिद्धसाधनत्वादिकमित्यत्रादिपदेनाप्रतिपादकत्वादिग्रहणं । भवतां मते । दृष्टांतदार्ष्टांतिकयोर्वैषम्यमुपपादयति ॥ **स्यादेवमिति** ॥ **तद्विशेषतयेति** । तद्धर्मतयेत्यर्थः ॥ **तन्मात्रमिति** । घटेनात्यंताभिन्नमित्यर्थः । खंडितत्वेन भेदाभेदसद्भावादिति भावः । तद्विशेषस्तद्धर्मः ॥ **यथा गुणगुणिनोरिति** । यावद्द्रव्य

पलंभे रूपस्यानधिगतिरेवमित्यत आह ॥ **मूलं—निर्विशेषत्वादात्मनो नानधिगतो विशेषः** ॥ स्यादेवं घटोपलंभेपि तद्रूपानुपलब्धिः यतो रूपं घटाभिन्नमपि तद्विशेषतयांगीक्रियते नतु तन्मात्रं । नचै (वमै) क्यमपि आत्माभिन्नं तद्विशेषः । येन आत्मनि सिद्धेप्यनधिगत इति युक्तं । आत्मस्वरूपस्य निर्विशेषत्वांगीकारादिति । अथापि स्यात् । भवेदिदं शास्त्रस्य सिद्धसाधनत्वादि

भाविगुणगुणिनोरित्यर्थः । अयावद्द्रव्यभाविनोर्गुणगुणिनोः सिद्धांते अत्यंताभेदाभावेन दृष्टांतीकरणानुपपत्तेः ॥ **तद्विशेषतयांगीक्रियत इति** । भेदप्रतिनिधिरूपविशेषाश्रयनिष्ठतद्धर्मतयेत्यर्थः ॥ **न चैक्यमपीति** । आत्माभिन्नं विशेषाश्रयनिष्ठधर्मरूपं नेत्यर्थः । येन तद्विशेषत्वांगीकारेण अनधिगतः ऐक्य-

रूपो विशेषः ॥ निर्विशेषत्वेति। निर्धर्मिकत्वेत्यर्थः ॥ यदि शास्त्रं साक्षादद्वैतमित्यादि । ननु कथमेतत् शास्त्रस्य साक्षादैक्यप्रतिपादकत्वे तज्ज्ञानासंभवेन तदावरणभूताज्ञाननिवर्तकत्वमेव न स्यात्। ज्ञानस्यैवाज्ञाननिवर्तकत्वादिति चेन्न। साक्षादित्यस्य मुख्यत इत्यर्थकत्वात्। तथा च न शास्त्र-

यदि शास्त्रं साक्षादद्वैतं प्रतिपादयतीति ब्रूमः। नचैवं। किंनामावरणभूताज्ञानमात्रं निवर्तयतीति। निवृत्ते त्वावरणेऽद्वैतं स्वत एवसिद्धं। तदुक्तं। सिद्धं तु निवर्तकत्वादिति। तत्राह ॥ मूलं–सिद्धत्वात्स्वरूपस्य विशेषाभावाच्च नाज्ञानं कस्यचिदावरकं। स्यादेवं शास्त्रस्यसिद्धसाधनतापरिहारः यदि परमते अज्ञानमावरणं संभवेत्। न चैतत्संभवति। आवरणं ह्याक्रियमाणेन

स्यैक्यप्रतिपादन एव मुख्यतस्तात्पर्यं। किन्नाम तत्प्रतिपादनद्वाराऽज्ञाननिवर्तन एवेति न कश्चिद्दोषः ॥ स्वत एवेति। अनायासेनेत्यर्थः। सिद्धं ज्ञातं। अत्रार्थे विवरणकारसंमतिमाह ॥ सिद्धं त्विति। शास्त्रस्य सार्थक्यं सिद्धं। कुतः निवर्तकत्वात् आवरणभूताज्ञाननिर्तकत्वादित्यर्थः ॥ व्यापकाभावा-

दिति । व्यापकीभूतस्य आव्रियमाणस्याभावादित्यर्थः ॥ इति च तन्मतमित्यत्र चशब्दसूचितदोषमाह ॥ परार्थत्वादिति । परप्रवृत्तिनिवृत्त्युपयोग्यर्थप्रतिपादकत्वादित्यर्थः ॥ एको दोषः ॥ ननु गंतृशब्दस्य कर्त्रर्थकतृच्प्रत्ययांतत्वेन अवगतिकर्तृवाचकतया करणे इंद्रियादावसंभव इत्यत आह ॥ गंतृशब्देनेति ॥

व्याप्तं । नचाज्ञानस्य तदस्ति । तथाहि । किमज्ञानमात्मस्वरूपस्यावरणं स्यादुत तद्विशेषस्य । नाद्यः । तस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् । न द्वितीयः । तदभावात् । तथाच व्यापकाभावाद्व्याप्यमावरणमपि न संभवतीति न तन्निवर्तकत्वेन शास्त्रस्यासिद्धसाधनत्वं भवतीति । अस्तु तर्हि सिद्धसाधनता शास्त्रस्य को दोष इति चेत् । परार्थत्वाच्छास्त्रस्य परसिद्धबोधनेऽनुपादेयत्वं स्यादित्येकः । अपरं चाह ॥ **मूलं—अनधिगतार्थगंतृ प्रमाणमिति च तन्मतं ।**

अवगतिसाधनमिति । अवगतिकरणमित्यर्थः । अर्थशब्देन तथाभूतार्थ उच्यते । तथाचानधिगततथाभूतार्थावगतिकरणं प्रमाणमिति लक्षणमभिप्रेत्य क्रमेण पदानां कृत्यं दर्शयति ॥ अनधिगतेतीत्यादिना ॥ स्मृत्यादीति ।

स्मृतेरादिः कारणं स्मृत्यादिः संस्कार इत्यर्थः । तथाच स्मृतेरपि तथाभूतार्थविषयकावगतित्वेन तत्कारणे संस्कारेऽतिव्याप्तिनिरासायानधिगतेति पदं। स्मृतेस्तु पूर्वानुभूतार्थावगतिहेतुत्वेनानधिगतार्थावगतित्वाभावान्न तत्कारणे संस्कारेऽतिव्याप्तिरिति भावः । तथाभूतार्थपदकृत्यमाह ॥ शुक्तिरजतादिज्ञानेति ॥ शुक्तिरजतादिः ज्ञायते अनेनेति व्युत्पत्त्या शुक्तिरजतादिज्ञान-

गंतृशब्देनावगतिसाधनमुच्यते । अनधिगतेति स्मृत्यादि(व्यवच्छेदार्थं)व्युदासार्थं । शुक्तिरजतादिज्ञाननिरासायार्थग्रहणं । (अर्थस्य च यथावस्थितस्य विवक्षितत्वात् ।) अर्थस्य फलस्य च निवृत्त्यर्थं गंतृपदं । तस्यच साधनपरत्वान्न

शब्देन दुष्टेंद्रियं ग्राह्यं ॥ गंतृपदमिति ॥ गंतृशब्दस्यावगतिकारणार्थत्वादित्यर्थः । तथाचानधिगततथाभूतार्थेत्युक्ते अर्थ एवातिव्याप्तिः स्यात्तदर्थं अवगतिपदं । तावत्युक्ते फलभूतायामवगतावेव अतिव्याप्तिः स्यात् तदर्थं कारणपदं। तथाच गंतृपदेन तदुभयनिवृत्तिरिति भावः ॥ एवं चेत्कर्तरि प्रमेये चातिव्याप्तिरित्यत आह॥ तस्य चेति॥ गंतृशब्दार्थांतर्गतस्य कारणपदस्येत्यर्थः॥

न कर्तरीति ॥ इदमुपलक्षणं । प्रमेयस्यापि विषयत्वेनावगतिकारणत्वात्तत्राप्य-
तिव्याप्तिपरिहारोऽनेन जायत इति । सत्यपि प्रमातरि प्रमेये च प्रमानुत्पत्तेः ।
तयोरविलंबेन प्रमोत्पादकत्वरूपसाधनत्वाभावादिति भावः । नन्वेतद्भाट्टानां

कर्तर्यतिप्रसंगः । एतद्भाट्टानां प्रमाणलक्षणं । व्यवहारे भट्टनय इति मायावादि-
भिरंगीकारात्तन्मतमित्युक्तं । यदि शास्त्रमधिगतमेवार्थमवगमयेत्तदा प्रमाणलक्षणा-
भावादप्रमाणं प्रसज्ज्येतेति । एवमयथार्थपरत्वमन्यथाप्रतिपादकत्वमित्याभिप्रे-
त्योपपादितं । अधुना विषयप्रयोजनादिरहितत्वमन्यथाप्रतिपादकत्वमभिप्रेत्य
तत्सिद्ध्यर्थं पराभिमतं शास्त्रस्य विषयादिकं परन्यायेनापाकरोति ॥ मूलं—
**अज्ञानासंभवादेव तन्मतमखिलमपाकृतं ।** तन्मतं तदभिमतं अखिलं
विषयादिकमपाकृतं वेदितव्यं । कथं । उक्तप्रकारेणैव तन्मतेऽज्ञानासंभवा-
द्विषयादेश्चाज्ञानसापेक्षत्वात् । अज्ञातोहि विषयो भवति । अन्यथाऽतिप्रसं-

लक्षणं । अतः तन्मतमिति कथमुक्तमित्यत आह ॥ एतदिति ॥ नन्वेतावता
प्रकृते किमायातमित्यतो मूलाभिप्रेतमापादनं दर्शयति ॥ यदीत्यादिना ॥

॥ पूर्वमिति । अनतिरेक इति मूल इत्यर्थः ॥ तद्विपर्ययेणेति । अतिरेकपक्षप्रति-

गादिति । एवमज्ञानासंभवेन विषयं निराकृत्य प्रकारांतरेण निराचष्टे ॥ मूलं—मिथ्यात्वे चैक्यस्यातत्वावेदकत्वमागमस्य स्यात् । ऐक्यं हिशास्त्रस्य विषतया परस्याभिमतं । तत्किमात्मस्वरूपातिरिक्तं उत तन्मात्रं । आद्ये(पि) सत्यं मिथ्यावा । नाद्यः । अद्वैतहानिप्रसंगात् । न द्वितीयः । ऐक्यस्य मिथ्यात्वे तत्प्रतिपादकस्य शास्त्रस्यातत्वावेदकत्वं स्यात् । तथा चापसिद्धांतः स्यात् । किंच ॥ मूलं—सत्यना च भेदस्य । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिना व्याप्तत्वादैक्यस्यमिथ्यात्वे भेदस्य सत्यता च स्यात् । अत एक्यमात्मस्वरूपमेवेत्यंगीकार्यं । स्वरूपस्य च स्वप्रकाशत्वेन न विषयता भंभवतीति । पूर्वमनतिरेकपक्षप्रतिषेधेनातिरेकपक्षमंगीकार्यायथार्थप्रतिपादकत्वं समर्थितं । इदानीं तु तद्विपर्ययेण विषयत्वाभावप्रतिपादनमिति भेदः । एवं विषयंनिराकृत्य प्रयोजनं निराकरोति ॥ मूलं—एवमेव प्रयोजनमपि निरस्तं । यथा

षेधेनानतिरेकपक्षमंगीकार्येत्यर्थः ॥

आत्मैवाज्ञानहानिरिति । अधिकरणातिरिक्ताभावाभावात् । व्यवहारे भट्टनय इत्यंगीकृतत्वादिति भावः । पूर्वमेवेत्यत्र शास्त्रप्रवृत्तेरिति शेषमभि-

अज्ञानासंभवादज्ञातस्य विषयस्यासंभवोऽद्वैतवादे एवमेवाज्ञानासंभवादेव शास्त्रस्य प्रयोजनमपि निरस्तं वेदितव्यं । मोक्षो हि प्रयोजनं । स चाज्ञाननिवृत्तिरूपः । यदाह । "अविद्यास्तमयो मोक्षः सा संसार उदाहृत" इति । नचाज्ञानासंभवे तन्निवृत्तिरुपद्यते । नन्वेतदज्ञानासंभवादेवेत्यनेनैव वाक्येन सिद्धं । तत्किमर्थोऽयं ग्रंथः । सत्यं । तथापि तस्यैव प्रपंचोऽयमित्यदोषः । प्रपंचनं च प्रकारांतरेण प्रयोजननिरासप्रस्तावायेति । प्रकारांतरेण प्रयोजनं निराकरोति ॥ मूलं—स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात् । प्रयोजनं निरस्तमिति संबंधः । अज्ञाननिवृतिलक्षणो हि मोक्षः परेणात्मस्वरूपतयैवेष्टः । यथाह आत्मैवाज्ञानहानिरिति । आत्मस्वरूपं च प्रागेव शास्त्रप्रवृत्तेः सिद्धमेवेति कथं तत्प्रयोजनं स्यात् । नहि कश्चित्सिद्धस्य साधनाय यतते । नापि तत्साधनार्हं । ज्ञात

प्रेत्याह ॥ प्रागेवेत्यादि ॥ ज्ञात आत्मैवेति । तथा चात्मनो ज्ञा(तत्वार्थं)

नार्थं शास्त्रप्रवृत्तिरिति भावः ॥ ज्ञानकर्मनेति । चैतन्याविषयत्वेत्यर्थः । वृत्तिप्रतिबिंबितचैतन्याभिव्यक्ताधिष्ठानचैतन्यरूपज्ञानविषयत्वस्य कर्तृकर्मविरोधनात्मनोनंगीकारादिति भावः ॥ वृत्तिविषयतेति । वेदांतजन्यवृत्तिरूपज्ञानविषयतेत्यर्थः ॥ प्रसंग इति । विशेषणनिवृत्तौ विशिष्टनिवृत्तिनियमादिति भावः ॥ वृत्त्युपलक्षित इति । नचोपलक्षणनिवृत्तौ उपलक्षितनिवृत्तिरिति

आत्मैवाज्ञानहानिर्नात्ममात्रमिति कश्चित् तदसत् । आत्मनो ज्ञानकर्मतानंगीकारात् । वृत्तिविषयताऽस्ती चेत् । तथापि वृत्ति विशिष्ट आत्मा मोक्ष इत्युक्तं स्यात् । तथाच वृत्तेर्न्निवृत्तौ मोक्षानिवृत्तिप्रसंगः । वृत्त्युपलक्षित अत्मा मोक्ष इति

नियमोऽस्ति । काकनिवृत्तावपि गृहानिवृत्तिदर्शनादिति भावः ॥ जीवन्मुक्ताविति । तत्वविषयकापरोक्षवृत्त्युपलक्षितस्यात्मनो जीवन्मुक्त्यवस्थायामपि सत्वेन तदानीमप्यज्ञाननिवृत्तिप्रसंगः । नचेष्टापत्तिः । भिक्षाटनादौ प्रवृत्त्यभावप्रसंगात् । नचाविद्यालेशात्प्रवृत्तिः । तस्याः निरंशत्वात् । सांशत्वेपि वा स अंशोऽज्ञानकार्यं न वा । न चेत्सत्यत्वापत्त्या मिथ्यात्वासिद्धिः ।

आद्ये अज्ञाननिवृत्तौ तस्यावस्थानानुपपत्तिः । उपादाननिवृत्तौ उपादेयस्यावस्थानादर्शनात् । नचाविद्यासंस्कारात्प्रवृत्तिरिति वाच्यं । तस्याप्युक्तरीत्याऽयोगादित्यादिकं दिक्शब्दार्थः । एवमिष्टसिद्धिकारमतानुसारितत्वप्रदीपिकाकारादिमतं दूषयित्वा आनंदबोधादिमतदूषणपरत्वेनोत्तरमूलं व्याख्यातुमाशंकते ॥ अपर आहेति ॥ अन्यमेवेति । आत्मस्वरूपाद्भिन्नमेवे-

चेत् । तथापि जीवन्मुक्तौ प्रसंग इत्येषा दिक् । अपर आह । नाविद्यास्तमयलक्षणं मोक्षमात्मस्वरूपमाचक्ष्महे किंनामान्यमेव । नचवाच्यं तस्य सत्वेऽद्वैतहानिरसत्वे तदभावः सदसत्त्वं विरुद्धं सदसद्विलक्षणत्वेऽज्ञाननिवृत्तित्वानुपपत्तिः

त्यर्थः । तस्य अविद्यास्तमयलक्षणमोक्षस्य ॥ असत्व इति । अज्ञाननिवृत्तिरूपमोक्षस्य शशशृंगवदत्यंतासत्वे मोक्षस्य स्वरूपत एवाभावः प्राप्त इत्यर्थः ॥ अज्ञाननिवृत्तित्वानुपपत्तिरिति । अज्ञाननिवृत्तेः सदसद्वैलक्षण्यांगीकारे अज्ञानस्यापि सदसद्विलक्षणत्वांगीकारेणाज्ञानतन्निवृत्त्योः त्वन्मते(सालक्षण्या) सदसद्वैलक्षण्यानुपपत्तिरित्यर्थः । कुत इत्यत आह ॥ प्रतियोगितन्निवृत्त्योरि-

ति । अत्र निवृत्तिशब्देन अत्यंताभाव एव विवक्षितः । न ध्वंसः । तथाहि । यदि निवृत्तिशब्देन ध्वंसो विवक्षितः स्यात्तर्हि प्रतियोगितद्ध्वंसयोः भिन्नसत्ताकत्वरूपं वैलक्षण्यमावश्यकमित्युक्तं स्यात् । तथाच तयोरेककालानवस्थानरूपो विरोध एव लोके न स्यात् । नहि प्रातिभासिकरूप्यस्य प्रध्वंसो व्यावहारिक इत्युक्ते कश्चन विरोधोऽस्ति । किंतु तयोः समानसत्ताकत्व एव । नहि रूप्यतद्ध्वंसावुभावपि व्यावहारिकावेकदा संभवतः । अत्यंताभावविवक्षायां तु प्रति-

प्रतियोगितन्निवृत्त्योर्वैलक्षण्यस्यावश्यकत्वादिति पंचमप्रकारताभ्युपगमात् ।

योगितदत्यंताभावयोर्भिन्नसत्ताकत्वरूपवैलक्षण्यमप्यावश्यकमेव । एवं सति तयोरविरोधः तन्मते संभवति । मायिना हि स्वात्यंताभावसामानाधिकरण्यं मिथ्यात्वमित्यंगीकृत्य मृत्पिंडे घटतदत्यंताभावयोरुभयोरपि सत्वमंगीकृत्य घटस्य मिथ्यात्वमुच्यते । तथाच प्रतियोगितदत्यंताभावयोर्विरोधः कुत्रापि तन्मते नास्त्येव । यद्यस्ति तर्हि निरुक्तं मिथ्यात्वं न सिध्यति । घटो व्यावहारिकस्तदत्यंताभावः पारमार्थिक इति तयोर्भिन्नसत्ताकत्वात् । यदि च प्रति-

योगितदत्यंताभावयोः समानसत्ताकत्वं तर्ह्येव विरोधः। नहि व्यावहारिकयोर्घटतदत्यंताभावयोरेकदैव स्थितिः संभवति। तथाच प्रकृतेप्यज्ञानस्य मिथ्यात्वासिद्धये स्वात्यंताभावसामानाधिकरण्यं एकस्मिन्काल एव वाच्यं। अन्यथा तन्नासिद्ध्येत्। तथाहि। यद्यज्ञानतदत्यंताभावयोः समानसत्ताकत्वं स्यात्तदा विरोधेन एककाले सत्तायोगेनाज्ञानस्य निरुक्तमिथ्यात्वासिद्धेः। अतस्तात्सिद्ध्येऽज्ञानतन्निवृत्त्योरविरोधोऽवश्यं वाच्यः। सच भिन्नसत्ताकत्वरूपवैलक्षण्योक्ता-

यथोक्तं। "नसन्नासन्नसदसन्नानिर्वाच्यश्च तत्क्षयः। यक्षानुरूपो बलिरित्याचार्याः

वेव संभवतीति। एवं प्रतियोगितदत्यंताभावयोर्भिन्नसत्ताकत्वरूपवैलक्षण्यस्यावश्यकत्वेन त्वन्मतेऽज्ञानस्य सदसद्विलक्षणत्वेन तन्निवृत्तेरपि सदसद्विलक्षणत्वमनुपपन्नमेवेति भावः। कुतो न वाच्यामित्यत आह ॥ पंचमप्रकारतेति। सदसद्विलक्षणविलक्षणत्वाभ्युपगमादित्यर्थः। तत्क्षयः अविद्याक्षयः नसान्नित्यादिसंबंधः ॥ यक्षानुरूपो बलिरिति ॥ लोके भावपदार्थस्य निवृत्तिरभावः अभावस्य च निवृत्तिर्भावः ॥ प्रतियोग्यापत्तेरेव अभावनिवर्तकत्वस्य प्रागभावे

दृष्टत्वात् ॥ भावाभावविलक्षणस्याज्ञानस्य निवृत्तिर्यादृशो यक्षः तादृशो बलिरिति न्यायेन पंचमप्रकार इत्यर्थः । यक्षस्याल्पत्वे तद्बलेरपि अल्पत्वं तस्य महत्त्वे तद्बलेरपि महत्त्वं दृष्टं । तद्वत् महायक्षस्थानीयाज्ञाननिवृत्तेः पंचमप्रकार-

प्रत्यपीपदन् " इति । तत्राह ॥ मूलं—अज्ञानासंभवेन चतुर्थप्रकाराभावात्पंचमप्रकारतापि निरस्ता । मोक्षस्येत्यनुवर्तते । अज्ञानस्य हि न सत्वं । अद्वैतभंगात् । नाप्यसत्वं । प्रतीतिविरोधात् । न च सदसत्वं । विरोधात् । अतश्चतुर्थप्रकारोऽनिर्वचनीयत्वमंगीकार्यम् । न च तन्निवृत्तिरपि तादृशी संभवतीत्येवं मोक्षस्य पंचमप्रकारता परेणांगीकृता । स्यादियं यद्यज्ञानमेव परमते स्यात् । नच तत्संभवति सिद्धत्वात्स्वरूपस्येत्यादिना तदसंभवस्योक्तत्वात् । अतोऽज्ञानासंभवेन चतुर्थप्रकारस्य सुतरामभावात्तेन कल्प्यमाना मोक्षस्य पंचम-

त्वरूपा महाबलिर्दीयत इति भावः । प्रत्यपीपदन् प्रतिपादितवंतः ॥ प्रतीतिविरोधादिति ॥ अहमज्ञ इति प्रतीतिविरोधादित्यर्थः ॥ यदसत्तन्न प्रतीयत इत्यंगीकारादिति भावः ॥ इयं परांगीकृता पंचमप्रकारता ॥ सुतरामिति ।

प्रकारिण एवाभावादिति भावः ॥ तेन कल्प्यमानेति । चतुर्थप्रकारासंभवेन कल्प्यमानेत्यर्थः ॥ पूर्वोक्तरीत्यैवेति । सङ्ख्यामधिकरणप्रतियोगिभ्यां अभावो निरूप्यत इत्युक्तत्वेनाज्ञाने सति तन्निवृत्तिरूपमोक्षस्य पंचमप्रकारता वक्तव्या । उक्तरीत्याऽज्ञानस्यैवासंभवेन तन्निवृत्तिरूपमोक्षस्य सुतरामसंभवेन पंचमप्रकारता कस्यस्यादिति भावः । अज्ञानकार्यं नवेत्यत्राज्ञाननिवृत्तिरिति वर्तते ॥

प्रकारतापि पूर्वोक्त रीत्यैव निरस्ता । अथवाऽज्ञाननिवृत्तिर्यद्यात्मातिरिक्ता पंचमप्रकारोररीक्रियते तदा वक्तव्यं । किमज्ञानकार्यं नवेति । न तावद्द्वितीयः । आत्मातितिक्तस्याज्ञानतत्कार्ययोरन्यतरत्वावश्यंभावाभ्युपगमात् । आद्ये बाधकमाह । अज्ञानासंभवेनेति । यद्यज्ञाननिवृत्तिरज्ञानकार्या तदाऽज्ञानस्य तदानी-

अवश्यं भावेति । आवश्यकत्वेत्यर्थः । तन्मते पदार्थस्त्रिप्रकारः । आत्मा अज्ञानं तत्कार्यं चेति । तथाच अज्ञाननिवृत्तेरात्मातिरिक्तत्वे अज्ञानतत्कार्ययोरन्यतरत्वं वाच्यं । तत्राज्ञाननिवृत्तेरज्ञानत्वायोगेन परिशेषादज्ञानकार्यत्वावश्यंभावादज्ञानकार्यं नेति पक्षो न युक्त इति भावः ॥ तदा तर्हि । तदानीं

अज्ञाननिवृत्तिदशायां। कुत इत्यत आह ॥ **नहीति** ॥ तर्ह्यस्त्वज्ञाननिवृत्तिदशायां अज्ञानं इत्यतोऽज्ञानासंभवेनेति मूलाभिप्रायमाह ॥ **अज्ञाननिवृत्ताविति** ॥ अज्ञाननिवृत्तिदशायामित्यर्थः। प्रतियोगितदत्यंताभावयोरेककालताया विरुद्धत्वादिति भावः॥ **उभयथेति**॥ अज्ञानकार्यत्वतदभावविकल्पाभ्यामित्यर्थः ॥ **स्वरूपमेवेति** । अज्ञाननिवृत्तिरूपमोक्षस्वरूपमेवेत्यर्थः ॥ दूरेति ॥

मवस्थानं स्यात्। न ह्युपादानेन विनोपादेयस्य स्थितिरस्ति। अज्ञाननिवृत्तावज्ञानासंभावात्। तथा चाज्ञाननिवृत्तेरुभयथाप्यसंभवेन स्वरूपमेव नास्ति। पंचमप्रकारता तु दूरनिरस्तेति। किंच घटादीनां सत्वं। शशविषाणादीनामसत्वं। घटादीनामेव देशकालादिव्यवस्थया सदसत्वमिति प्रकारत्रयस्यैवानुभवा-

प्रकारिण एवाभावादिति भावः। अस्यां योजनायां चतुर्थप्रकाराभावादित्युर्वरितं तद्योजयति ॥ **किंचेत्यादिना**॥ **देशकालादिव्यवस्थयेति** ॥ आदिपदेन प्रकारग्रहणं। तथाच घटस्य हि स्वोपाधौ सत्वं परोपाधावसत्वं। इदानीं सत्वं कालांतरे असत्वं घटत्वेन प्रकारेणसत्वं पटत्वादिप्रकारेणासत्वमिति व्यवस्थये-

त्यर्थः ॥ अनुभवादिति । तथाच दृष्टानुसारणी हि कल्पना दृष्टा । घटादिप्रपंचे प्रकारत्रयस्यैवानुभूयमानत्वेनाज्ञाननिवृत्तावपि व्यवस्थायाः सत्वासत्वसदसत्त्वरूपप्रकारत्रयस्यैव वाच्यत्वादिति भावः ॥ चतुर्थप्रकार एवेति । अननु-

च्चतुर्थप्रकार एव नास्ति । तदभावात्पंचमप्रकारता तु मोक्षस्याष्टमरस इवात्यंतासंभाविनीत्याह । चतुर्थप्रकारेति । अज्ञानासंभवादधिकारीच निरस्त इत्युक्तं तद्विवरणार्थमाह ॥ मूलं—विषयप्रयोजनाभावादेवाधिकारी च ॥ निरस्त इति संबंधः । यो हि यत्प्रयोजनमर्थयमानो यं विषयं जिज्ञासते स एव तत्राधिकारी भवति । प्रकृते चाज्ञानासंभवेन विषयप्रयोजने निराकृते इति तदभावादेव तदविनाभूतोऽधिकारी च निरस्तो वेदितव्यः । अज्ञानासंभवात्संबंधाभाव उक्तस्तमुपपादयति ॥ मूलं—तदभावादेव संबंधोपि ॥ सतामेव हि

भूयमानत्वादिति भावः ॥ अष्टमरस इवेति । लोकेषड्रसानामेवानुभवेन सप्तमरसस्यानुभूयमानत्वाभावे अष्टमरसो यथाऽत्यंतासंभावितस्तद्वादित्यर्थः ॥ तदभावादेवेति ॥ विषयप्रयोजनयोरभावादेवेत्यर्थः ॥ तदविनाभूत इति । विष-

॥२०॥ याादिघटितलक्षणक इत्यर्थः ॥ सतामेव हीति ॥ नहि शशशृंगनृशृंगयोः संबंधोस्तीति भावः ॥ विषयाद्यभावादिति । संबंधिनामेवाभावादिति भावः । इति विष्णोः पुरुषोत्तमत्वमेवेति वक्ष्यमाणमूलं व्याकुर्वन्नाह ॥ परमाप्ततमेनेत्यादिना । क्षराक्षरयोः समस्तयोरपि प्रत्यक्षसिद्धत्वाभावाद्द्वाविमावित्यनुपपन्न-

संबंधो भवति । अज्ञानासंभवेन विषयाद्यभावश्चोपपादितः । अतोविषयाद्यभावात्संबंधोपि निरस्त एवेति । एवं वेदादेर्जीवब्रह्मणोरेकत्वप्रतिपादकत्वेऽनारंभणीयत्वप्रसंगान्न तत्प्रतिपादकत्वमित्युक्तं । इदानीं परमाप्ततमेन भगवता श्रुत्याच विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्रप्रतिपाद्यतयाऽभिहितत्वाच्च तदेव वेदादिप्रतिपाद्यं नात्मब्रह्मैक्यमित्याह ॥ मूलं—द्वाविमौ पुरुषौ लोके क्षर-

मित्यत आह ॥ इमावितीति ॥ ननु "ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षरा" इति प्रमाणानुसारेण ब्रह्मादिपुरुषाणामिव सरस्वत्यादीनां स्त्रीणामपि शरीरक्षरणयोगेन क्षरशब्दवाच्यत्वावगमात् ॥ पुरुषौ द्वावित्युक्ते सरस्वत्यादिस्त्रीणामक्षरशब्दवाच्यरमायाश्चासंग्रहापत्त्या तत्संग्रहाय पुरुषशब्दार्थमाह ॥ ॥२०॥

पुरुषौ चेतनाविति । चशब्दः अन्यसमुच्चायकः । एवशब्दश्चान्यव्यावर्तकः ॥ तथाच विरुद्धयोस्तयोरेकत्र समावेशायोगाद्भिन्नक्रमेणैव संबंधं दर्शयति ॥ एवशब्दस्येति ॥ तद्घटनायेति ॥ परमपुरुषस्य तृतीयस्य वक्ष्यमाणत्वात् द्वावेवेत्येतदनुपपन्नमित्याशंक्य द्वावेवेत्यस्योपपत्तय इत्यर्थः ॥ लोक इति । ईशितव्यवर्ग इत्यर्थः । क्षरस्सर्वाणि भूतानीत्यादेरयमर्थः । सर्वाणि भूतानि

क्षराक्षर एव च । इमाविति प्रमाणसिद्धतां सूचयति । पुरुषौ चेतनौ । एव शब्दस्य द्वावेवेति संबंधः । तद्घटनाय परमपुरुषं व्यावर्तयितुं लोक इत्युक्तं ॥ मूलं—क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । तदनेनोत्तमपुरुषानि-

ब्रह्मादयो जीवाः शरीरक्षरणयोगेन क्षरशब्देनोच्यंते । यथोक्तं "ब्रह्मा शिवस्सुरेशाद्याः शरीरक्षरणात्क्षरा" इति । कूटस्थः 'कूटं खं विदलं व्योम संधिराकाश उच्यत' इत्यभिधानात् कूटमव्याकृताकाशः । तद्वन्निर्विकारतया स्थितत्वात् कूटे अव्याकृताकाशे अभिमानितया स्थितत्वाद्वा कूटस्थशब्दवाच्या महालक्ष्मीः अक्षरदेहत्वनिमित्तेनाक्षर इत्युच्यत इत्यर्थः । यथोक्तं "लक्ष्मीरक्षरदेह- 11

त्वादक्षरेति", पुंवच्छक्तियुक्तत्वात्पुल्लिंगशब्दवाच्यत्वं युक्तं । यथाहुः 'पुलिंगेनोच्यते श्रीश्च पुंवच्छक्तिमती यत' इति ॥ **अपेक्षितमिति** ॥ उत्तमत्वस्यावधिसापेक्षत्वादिति भावः । **सम्मतिः** समाख्या ॥ **उदाहृत इति** ॥ परमात्मा व्यवस्थित इति श्रुतावुक्त इत्यर्थः । ननु निर्णीतस्थले समानोक्तिः समारूपणस्यापेक्षितं पुरुषनिरूपणं कृतं । ततः किमित्यत आह ॥ **मूलं–उत्तमः पुरुषस्त्वन्यः** ॥ अन्यः क्षराक्षराभ्यां । न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति भावः । अन्यस्योत्तमपुरुषत्वे श्रुत्यादिसंमतिमाह ॥ **मूलं–परमात्मेत्युदाहृतः** । आत्मशब्दोत्र चेतनपर्यायः । युक्तिं चाह ॥ **मूलं–यो लोकत्रयमाविश्य बिभर्ति** । यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः । आविष्टस्य ख्या । तथाच यदीयं अर्थसमाख्या तर्हिपरमचेतन इति वक्तव्यं । यदि च शब्दसमाख्या तर्हि परमपुरुष इति वक्तव्यं । आत्मेति कथमुक्तमसंगतत्वादित्यत आह ॥ **आत्मशब्दोऽत्रेति** ॥ तथा चेयमर्थसमाख्येति भावः ॥ **युक्ति चाहेति** । क्षराक्षरान्यस्योत्तमपुरुषत्वे श्रुत्यादिसम्मतिमुक्त्वा युक्तिं चाहेत्यर्थः ॥

आविष्टस्येति ॥ लोकत्रयं प्रविष्टस्येत्यर्थः । तन्नाशे लोकत्रयनाशे ॥ नाशप्रसंग इति ॥ दह्यमानगेहांतर्गतपुरुषवादिति भावः ॥ तत् अव्ययत्वं ॥ ऐश्वर्यादिति ॥ अघटितघटक शक्तिसंपन्नत्वादित्यर्थः । अग्निस्तंभविद्यावतो दाहाभाववदिति भावः । एकार्थयोश्चापिशब्दयोरन्यतरवैयर्थ्यमाशंक्याह ॥

तन्नाशे नाशप्रसंग इत्यत आह ॥ मूलं—अव्ययः । तत्कथं । ऐश्वर्यादित्याह ॥ मूलं—ईश्वरः । सचक इत्यतोऽहवेवेति सप्रमाणकमाह ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । क्षरं चातीत इति चशब्दान्वयः । लोकशब्देन पौरुषेयागम उच्यते । तात्पर्यद्योतनाय वेत्तुः फलमाह ॥ मूलं—योमामेवमसंमूढो जानाति पुरुषोत्तमं । स सर्वविद्भजति मां सर्वभावेन भारत । एवमित्यस्य व्यावृत्तिनिरासोऽ

क्षरं चेति ॥ तात्पर्येति ॥ स्वस्य पुरुषोत्तमत्व इत्यर्थः ॥ फलमिति ॥ 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलं । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णय' इति वचनेन फलस्य तात्पर्यद्योतकत्वावगमादिति भावः ॥ एवमित्यस्य

व्यावृत्तिनिरास इति ॥ पुरुषोत्तम इत्यस्य यस्मात्क्षरमतीतोऽहमित्यादिना यौगिकोऽर्थ उक्तः । सएवामित्यनेन परामृश्यते । एवं च एवमित्यस्य योगिकार्थस्य व्यावृत्तिर्नामरूढिः । तन्निरासोऽसंमूढ इत्यनेन क्रियते । तथा चैवमसंमूढपदाभ्यां इत्युक्तं भवति । तद्व्यावर्त्यं दर्शयति ॥ **न त्वश्वकर्णादिवदिति** ॥ संज्ञामात्रत्वेनेति । रूढिमात्रत्वेनेत्यर्थः । यद्वा एवमित्यस्य यौगिकार्थस्य व्यावृत्तिर्मिथ्यात्वं तन्निरासोऽसंमूढ इति पदेन क्रियते । तदभिप्रायमाह ॥

संमूढ इति । न पुनरश्वकर्णादिवत्संज्ञामात्रत्वेनेत्यर्थः । स सर्ववित् । अस्यैव सर्वशास्त्रार्थत्वात् । सर्वभावेन सर्वप्रकारेण । एतच्च न यस्मै कस्मैवाच्य-

न त्वश्वकर्णादिवदिति ॥ यथाऽश्वकर्णादिवाद्विद्यमानकर्णवत्त्वं पुरुषे अपारमार्थिकं कुतः संज्ञामात्रत्वात् । एवमुक्तरीत्या यौगिकं पुरुषोत्तमत्वं हरावपारमार्थिकं संज्ञामात्रत्वादित्यादिसम्मोहवर्जित इत्यर्थः । अनेनैवाभिप्रायेणोक्तं विष्णुतत्त्वनिर्णयटीकायां ॥ 'एतच्च पुरुषोत्तमत्वं अपारमार्थिकमिति सम्मोहवर्जित' इति । सर्वभावेनेत्येतदन्यथाप्रतीतिनिरासाय व्याचष्ट इति ॥ सर्व-

प्रकारेणेति ॥ बुध्वा बुद्धिमानित्यनयोः पौनरुक्त्यपरिहाराय व्याचष्टे ॥ बुद्धिमानपरोक्षज्ञानीति । मतुपोऽतिशयार्थत्वात् । अपरोक्षज्ञानस्य परोक्षज्ञानादतिशयितत्वादित्यर्थः । तथा(च)बुध्वेत्येतत्परोक्षतो बुध्वेति व्याख्येयमिति भावः । इंद्रियेभ्यः पराह्यर्था इति श्रुताविंद्रियादिशब्दाः अभिमान्यधि-

मित्याह ॥ मूलं—इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । स सर्वविदित्याद्युक्तं । तत कित्यत आह ॥ मूलं—एतद्बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत । बुद्धिमानपरोक्षज्ञानी । कृतकृत्यो मुक्तः । मूलं—इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तत्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः । आत्मा

करणन्यायेन तत्तदभिमानिदेवतापरा इति ज्ञातव्यं । बुद्धेरात्मा परः आत्मनश्च महान् पर इति वैयधिकरण्येन योजनाशंकां परिहरति ॥ आत्मा महानितीति । बुद्धितत्वाभिमानिसरस्वत्यनंतरं महत्तत्वाभिमानिचतुर्मुखादर्वाक् अन्यस्योत्तम-

स्याभावादिति भावः । तथाच 'आत्मा विरिंचः सुमनाः सुधौतश्वेति कथ्यते' इत्यभिधानात् महत्तत्वाभिमानी आत्मा विरिंचः बुद्धेः सरस्वत्याः सकाशात्पर इत्यर्थः ॥ पुरुषो नारायणः । पुरुषो हवै नारायणः, सहस्रशीर्षापुरुष इत्यादिश्रुतेरिति भावः ॥ अवधिरिति । तारतम्यांतगत इत्यर्थः ॥ कुत एतदिति ॥ तारतम्यांतगतत्वरूपमवधित्वं कुतः प्रमाणात्प्रतिपत्तव्यं । प्रमाणाभावादनुपपन्नमिति यावदित्यर्थः । ननु परा गतिरित्यंतेन किं प्रमाणमुक्तमित्याशंक्य

महानिति सामानाधिकरण्यं नपरं किंचित् । किंतु सा काष्ठा स एवावधिः । कुतएतत्सा परागतिः । गम्यत इति गतिः । एवं सर्वशास्त्रैः प्रति-

गतिशब्दस्य भावकरणार्थप्रतीतिनिरासाय कर्मसाधनत्वं अभिप्रेत्य गतिशब्दं व्याख्याति ॥ गम्यत इति गतिरिति ॥ अवगम्यत इत्यर्थः । गतिशब्दं प्रयुंजानायाः श्रुतेः सर्वशास्त्राण्येव तत्र प्रमाणतया अभिप्रेतानीत्याशयेनाह ॥ एवमिति ॥ एतदवधित्वमेव तारतम्यांतगतत्वेन सर्वशास्त्रैः प्रतिपाद्यत इति हेतोरूपपद्यतइत्यर्थः । एतदिति प्रश्नधर्म्यंशानुवादः । दृश्यते च धर्म्यंशानु-

वादेनाप्युत्तराभिधानं । कः स्विदेकाकी चरतीति प्रश्ने य एकाकीचरति स सूर्य इत्यभिप्रेत्य सूर्य एकाकी चरतीत्यादौ । तद्वदिहापीति ज्ञातव्यं । भूम्न इति सूत्रं । पूर्णज्ञानः पूर्णानंद इति ज्ञानादिसर्वगुणविशेषणतया पूर्णत्वरूप-भूमगुणस्य सर्वोपास्यत्वरूपं ज्यायस्त्वं विवक्षितमिति भाष्योक्तव्याख्यानस्य अत्रानुपयुक्तत्वात्प्रकृतोपयुक्ततयाऽभिप्रेतं सूत्रार्थमाह ॥ सर्वगुणेष्विति ॥

पाद्यत इत्येत् ॥ मूलं—ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ओम् । सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं मुख्यतो वेदप्रतिपाद्यत्वमिति सूत्रार्थोऽत्राभिमतः ॥ मूलं—इति विष्णोः सर्वोत्तमत्वमेव शास्त्रार्थत्वेन भगवता श्रुत्या चाभिहितं । एवं प्रकरणार्थमुपपाद्य तस्य प्रयोजनमाह ॥

भूमगुणस्येति । सर्वोत्तमत्वरूपपूर्णत्वाख्यभूमगुणस्येत्यर्थः । श्रुत्या चाभि-हितमित्यनंतरं तदेव वेदादिप्रतिपाद्यं न ब्रह्मात्मैक्यमित्युक्तरीत्या शेषो द्रष्टव्यः । अत्र इति विष्णोरिति वाक्यं टीकाकाराणामेव न भगवत्पादवाक्यं क्वचिन्मूल-कोशे पाठादर्शनादिति केचित्सांप्रदायिका आहुः ॥ बहुमूलकोशेषु पाठदर्श-

नात् भगवत्पादीयं वाक्यमेवेति बहवः सांप्रदायिका इति ज्ञातव्यं ॥ अन्यथा हीति । भ्रांतिनिरासाकरणइत्यर्थः ॥ तदनुगुणमिति । प्रकरणप्रतिपाद्यसर्वोत्तमत्वानुगुणमित्यर्थः । भगवद्वाक्यं भारतरूपं व्यासवाक्यं । समापितग्रंथो

मूलं—इति सर्वज्ञमुनिना मायावादतमोऽखिलं । निरस्तं तत्ववादेन सतां संशयनुत्तये । अन्यथाहि विप्रतिपत्तेः संशयो भवति । प्रकरणार्थमुपसंहरन् तदनुगुणं भगवद्वाक्यमेव पठति ॥ नास्ति नारायणसमं न भूतं न भविष्यति । एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहं ॥ वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता । ध्रियतां सदये हृदये



भगवांष्टीकाकारोंतेपि मंगलमाचरति ॥ वचनेति । यथा केनाचित् भिक्षुणा रचिता पुष्पमाला ऐश्वर्यवंतं पुरुषं प्रति दत्ताचेत्तेन दयया हृदये ध्रियते तद्वादि-

त्यर्थः । सदये दयया सहिते ॥ कमलेति । महिला वनिता प्रियेत्यभिधा-
नात् । कमला महालक्ष्मीः महिला वनिता यस्यासौ तथोक्तः तेनेत्यर्थः ॥
यादवार्यहृदंभोजभातश्रीमध्वहृद्गतः । वासवीसूनुरमलः प्रीयतां बादरायणः ॥१॥

कमलामहिलेन पुरुषेण ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितमाया-
वादखंडनविवरणं जयतीर्थभिक्षुविरचितं संपूर्णम् ॥

इति श्रीयदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिता मायावादखंडन-
पंचिकाव्याख्या समाप्ता ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

अथं ग्रंथः कुंभघोणस्थमध्वविलासपुस्तकालयाधिपानां पंडित,
टी. आर्. कृष्णाचार्याणां पुत्रेण टी. के. वेंकोबाचार्येण
कुंभघोणस्थे "श्रीविद्यामुद्रणयन्त्रे" मुद्रापयित्वा
प्रकाशितः ।
शके १८५१. शुक्लनामसंवत्सरे । सन् १९२९.



इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितम्
मायावादखंडनम् ।
श्रीमत्पद्मनाभतीर्थकृतया टीकया–श्रीमज्जयतीर्थ
विरचितया टीकया–श्रीनिवासतीर्थ
विरचितया तट्टिप्पण्या च युतम् ॥

# अथ श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितम्

## उपाधिखंडनम् ।

श्रीमत्पद्मनाभतीर्थकृतया टीकया–श्रीमज्जयतीर्थ विरचितया टीकया–श्रीनिवासतीर्थ विरचितया तट्टिप्पण्या च युतम् ॥

KV

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ।

॥ श्रीमत्पद्मनाभतीर्थविरचिता उपाधिखंडन टीका ॥

॥ १ ॥ ॐ व्यां ॐ ॥ अज्ञानवशादीशस्य संसारित्वमिति यन्मायिमतं तत्पूर्वश्लोकोक्ताशेषदोषोज्झितत्वासिद्ध्यर्थं निराकरोति ॥ अज्ञानाऽखिलसंवेत्तुरित्यादिना ॥ सर्वज्ञत्वादिलक्षणमीश्वरत्वम् असर्वज्ञत्वादिलक्षणं संसारित्वमेकस्यैवोपाधिव-

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

## ॥ उपाधिखंडनमूलम् ॥

ॐ ॥ नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः । अशेषदोषरहितः प्रीयतां कमलालयः ॥ अज्ञानाऽखिलसंवेत्तुर्घटने

शाद्युज्यत इति न वाच्यं । उपाधेर्निरूपयितुमशक्यत्वात् । तथाहि— जीवेश्वर- ॥ १ ॥
भेदोपपादकोपाधिरनध्यस्तो वा स्यादज्ञानकल्पितो वा । अनध्यस्तश्चेदद्वैतभंगः स्यात् । आत्मव्यतिरेकेणोपाधेः सत्यत्वांगीकारात् । अज्ञानहेतुकश्चेदुपाधेरनवस्थाऽन्योन्याश्रयत्वं वा स्याच्चक्रकापातिर्वा स्यात् । अज्ञानस्यास्वतः सिद्धत्वात्? ।

तथाहि—यदज्ञानमुपाधिकाल्पितं तदप्यज्ञानांतरकल्पितं तदप्यज्ञानमज्ञानांतरकल्पितमित्यनवस्था। अज्ञानसिद्धावज्ञानकल्पितजीवसिद्धिः जीवसिद्धौ तदाश्रयाज्ञानसिद्धिः इत्यन्योन्याश्रयत्वं। अज्ञानसिद्धावध्यस्तोपोपाधिसिद्धिः उपाधिसिद्धावुपाध्युपहितजीवसिद्धिः जीवसिद्धौ तदाश्रयाज्ञानसिद्धिरितिवक्तव्यं। अज्ञानस्य स्वतः सिद्धौ ब्रह्मनिवृत्तिः स्यात्। स्वतः सिद्धस्य मायिनानिवृत्त्यंगीकारादि-

न कुतश्चन। उपाधिभेदाद्धटत इति चेत्स स्वभावतः। अज्ञान-
तो वा द्वैतस्य सत्यता स्वत एव चेत्। अनवास्थितिरज्ञानहेतौ
वाऽन्योन्यासिद्धिता। चक्रकापत्तिरथवा भेदश्चोपाधितः कुतः।
विद्यमानस्य भेदस्य ज्ञापको नैव कारकः। उपाधिर्दृष्टपूर्वोहि

त्यर्थः। इतोऽपि नोपाधिकृतो जीवेश्वरभेदइत्याह॥ भेदश्चोपाधितः कुत इत्यादिना॥ न च मठाकाशमहानसाकाशवदुपाधिवशात् सुरनरादिजीवेशभेदोयुज्यत इति वाच्यं। मठाकाशाद्याकाशानां स्वभावत एव परस्परं भिन्नत्वात्। स्वतोविद्यमाना——वप्रकाशप्रदे—शविशे——ना लोकादिप्रदेशविशेपाविव

विविच्य घटाद्युपाधयो ज्ञापयंतीत्यंगीकर्तव्यं । स्वतः सिद्धप्रदेशविशेषाभावे घटाद्युपाधिराकाशस्य संयोगो न स्यात् । एकदेशवृत्तित्वात्संयोगस्याकृत्स्नाकाशवृत्तिघटसंयोगस्य मठाकाशे न स्यात् । घटेनैव कृत्स्नाकाशस्य ग्रस्तत्वात् । उपाध्यंतरकल्पिताकाशस्यैकदेशवृत्तित्वे घटसंयोगसंबद्धस्याप्युपाध्यंतरकल्पितैकदेशवृत्तित्वमित्यनवस्था स्यात् । एतदाकाशप्रदेशात्संबद्धस्यात्र घटस्यात्रघटा

त्वेऽपि देशान्तरस्य सः । ज्ञापको विद्यमानस्य मूढबुद्धिव्यपेक्ष
या । न चेदुपाधिसंबंध एकदेशोऽथ सर्वगः । एकदेशेऽनवस्था
स्यात्सर्वगश्चेन्न भेदकः । सुखदुःखादिभोगश्च स्वरूपैक्ये न

काशव्यवहारजनकत्वे देशांतरस्थघटस्यात्र घटाकाशव्यवहारजनकत्वं स्यादित्यर्थः । सुखदुःखादिव्यवस्थान्यथानुपपत्या अमरनरादीतराकाशभेदः स्वाभाविक एव । नतूपाधिकल्पित इत्याह ॥ सुखदुःखादिभेदस्येत्यादिना ॥ अथाचेतनस्योक्तत्वेन शिरश्चरणादिभेदेऽपि तत्तद्गतसुखदुःखाद्यनुसंधानं दृश्यते पादे वेदनेति । यथा सौभर्यादेर्योगप्रभावेन बहुशरीरग्रहणसमर्थस्य नानादेह-

गतसुखदुःखाद्यनुसधानं दृश्यते बहुशरीराधिष्ठातुर्योगिन एकत्वात् । एवं सुर-
नराद्यनेकोपाधिसंबद्धस्यैकत्वे । सुरनरगतसुखदुःखाद्यनुसधानं स्याद् ——
न च बहुशरीरगतसुखदुःखाद्यनुसधानं योगिनोनास्तीति वाच्यं । बहुशरीरग्रह-
णकामस्य वैयर्थ्यापत्तेः । न च सत्तया शरीराद्युपसंयुज्यते । भोगसाधनत्वरहित
शरीराणां अनंतानां लोकसिद्धत्वेन योगिनः पृथग्बहुशरीरग्रहणवैयर्थ्यापत्तेरित्य-

भेदतः । दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा । नाना-
देहगभोगानुसंधानं योगिनो यथा । न चेद्भोगानुसंधानं
तदिच्छा योगिनः कुतः । अनुसंधानरहितदेहबाहुल्यमन्यथा ।
सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः । सिद्धौ हि कर्म

र्थः ।। आत्मन्यविद्यमानभेदापादकोपाधिभेदस्याज्ञानतः सिद्धिर्हिनिराकृता प्राक् ।
अधुना सिंहावलोकनन्यायेन कर्मभेदात्तत्सिद्धिरित्येतद्दूषयति ।। सिद्धौ हि
कर्मभेदस्येति ।। न च जीवेशयोर्जीवानां परस्परं स्वाभाविकभेद इत्यंगी-
कारे औपाधिकभेदपक्षोक्तानवस्थित्यादिदूषणोद्भावनं कर्तुं शक्यते । तस्मादौ-

पाधिको जीवेशभेदस्तदुपाधिपूर्वकः प्रपंचो मिथ्यैवेत्युक्तः पक्षस्सर्वोपि दुष्ट एव प्रत्यक्षादिप्रमाणविरोधाच्चेत्याह ॥ आत्मस्वभावभेदस्येति ॥ जीवेशयोर्जीवानां च परस्परं भेदं प्रमाणैस्साधयति ॥ चेष्टालिंगेनेत्यादिना ॥ स्वात्मनि तावदहं सुखी दुःखी त्याद्यनुभवसिद्धपरदेहगततत्तज्जीवास्त्वनुमानेन सिध्यंति । तद्देहाः सात्मकाः प्राणादिमत्त्वात्स्वदेहवदित्यनुमानात् । एवमनुमिते-

भेदस्य स्यादुपाधिविभिन्नता । तत्सिद्धौ चैव तत्सिद्धिरित्यन्यो-
न्यव्यपाश्रयः । आत्मस्वभावभेदस्य विदोषत्वेन चाग्रिलः ।
प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा । चेष्टालिङ्गेन सा-
त्मत्वे परदेहस्य साधिते । अन्यत्वं स्वात्मनस्तस्मात्सर्वैरेवानु-

भ्यो जीवेभ्यो भेदः स्वात्मनोऽनुभव सिद्धः । नह्येते जीवा अहमिति कस्यचिदनुभवोऽस्ति । सर्वज्ञसर्वशक्तिमत्त्वादिगुणविशिष्टत्वाद्यस्सर्वज्ञः सर्वविदित्यादिश्रुतिसिद्धादीश्वरादपि भेदो जीवस्यानुभवसिद्धः । अल्पज्ञत्वाल्पशक्तिमत्त्वदुःखित्वेन जीवस्यानुभूयमानत्वात् । न च सर्वज्ञत्वसर्वशक्तिमत्त्वादेरीश्वरमहिम्नो

मिथ्यात्वं वक्तुं शक्यते । " सत्यः सो अस्य महिमा " इत्यादिविरोधात् । न च " साक्षी चेता केवलो निर्गुणश्च " इतिश्रुत्येश्वरो निर्गुण इति वाच्यं । निर्गुणशब्दस्यात्र सत्वरजस्तमोगुणराहित्यपरतयोपपन्नत्वेनेश्वरमहिमाऽनिषेधकत्वात् । अन्यथा यस्सर्वज्ञइत्यादिश्रुतिविरोधात् । यत्किंचिदनुमानं माहिम्नो मिथ्यात्वे न प्रमाणं । श्रुतिबाधितविषयत्वेनानुमानस्याप्रामाण्यादित्यर्थः ॥ अधु-

भूयते। अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता। सर्व-
ज्ञतादीशगुणविरुद्धा ह्यनुभूतिगाः। सार्वज्ञ्यादिगुणा विष्णोः
श्रुतिषु प्रतिपादिताः। सत्यः सो अस्य महिमेत्यादिवाक्या-
न्मृषा न च। न च वेदोक्तमिथ्यात्वे मानं तन्मानताऽपि न।
अतोऽज्ञासंभवादेव नाधिकार्यैक्यवादिनां। अतो नाज्ञात-

ना जीवेशाभेदमतेऽधिकारिविषयप्रयोजनासंभवमाह ॥ अतोऽज्ञासंभवादेवेत्यादिना ॥ ब्रह्मणस्सर्वज्ञस्याज्ञानं न संभवतीत्युक्तत्वात्ततोन्यस्याज्ञस्य जीवस्याभावादज्ञो जिज्ञासुरधिकारी तन्मते न संभवति। अज्ञानस्यासंभवेनाज्ञातो ज्ञातव्यो विषयोविषयांन्तरे देशांतरे त्वेष्टव्यो न तु मायावादे अधिकार्यसंभवे-

॥ ४ ॥ नाज्ञाननिवृत्तिलक्षणं वा फलं न कस्यचिद्विद्यते । शशनृशृंगयोरिवाऽविद्यमानाधिकारिविषयप्रयोजनानां न कश्चित्संबंधो घटत इत्यर्थः ॥ दुर्घटत्वं भूषणं चेत्यस्यायमर्थः ॥ अविद्यायास्तावद्दुर्घटस्वभावोऽवगम्यते । स्वशिरच्छेदनादेर्द्रष्टुमयोग्यस्यापि स्वप्नादाववविद्याप्रभावेन दृष्टत्वात् । एवं दुर्घटाविद्ययैव सर्वज्ञः स्वयंप्रकाशोप्यज्ञो भविष्यति । तथा तयैवाज्ञोऽधिकार्यज्ञातो विषयश्चेत्यादि युज्यत इत्यंगीकारे दुर्घटघटकाविद्याया एवात्मनोप्यविद्यात्वं तथा तयैव मायि-

> मिनि च विषयो विषयांतरे । अज्ञाभावात्फलं कस्य योगः
> शशनृशृंगयोः । दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः ।
> अंधंतमोऽप्यलंकारो नित्यदुःखं शिरोमणिः । अतः परोमाज्ञ-

नामंधंतमोऽलंकारो नित्यदुःखं शिरोमणिश्च स्यात् । नहि दुर्घटाविद्यया घटकानां न घटत इति वक्तुं शक्यत इति । विषयाधिकारिप्रयोजनसंबंधांस्तत्ववादे दर्शयति ॥ अतःपरइत्यादिना । अस्यार्थः सर्वोत्तमो विष्णुर्विषयः तमीश्वरं स्वात्मादिभ्योऽत्यंतभिन्नत्वेन स्वयं तस्मादत्यंताभिन्नस्सन्स्वसेवया यःपश्यति सोऽधिकारीत्यस्य यथायोग्यं स्वात्मसादृश्यं भगवान्विष्णुर्दर्शयति । तत्सादृश्यलाभा- ॥ ४ ॥

देवमोक्षाख्यं प्रयोजनं विषयः ज्ञातस्य विष्णोर्मोक्षस्य दातृदेयभावलक्षणः संबंधः । तदिदं सर्वं दृश्यते "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवंति न ते विष्णो जायमानो न जातो देव महिम्नः परमंतमाप" इत्यादि श्रुतौ भूतभविष्यद्ब्रह्मरुद्राद्यप्राप्यमाहात्म्यो विष्णुः प्रतिपाद्यते "जुष्टं यदा पश्यत्यन्यमीशमस्य माहिमानमिति वीतशोक" इत्यादि श्रुत्याऽयमर्थउच्यते । इत्युक्तप्रकारेण जुष्टं सेवितं तं च यदास्यजीवादेरीशं महात्मानं स्वात्मादिभ्योऽन्यं पश्यति तदावीतशोको भवतीति । "यदा पश्यः पश्यते रुक्मवर्णं कर्ता-

येति पूर्वश्रुतिनिदर्शितः । अन्यमीशमिति श्रुत्या भिन्नजीवदृशां

रमीशं पुरुषं ब्रह्मयोनिं । तदाविद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति" इति यदेतच्छ्रुतिः मोक्षादिफलदातृत्वं चात्रविष्णोः "फलमत उपपत्तेः" पुण्येनपुण्यं लोकं नयति ॥ इत्यादि वचनसिद्धमवगंतव्यं । मायावादादिनिराकरणस्य प्रयोजनमाह ॥ मायावादेति ॥ यथा हनुमद्भीमसेनौ सुरारिसंहरणाख्यजगाद्धितकरणनेन श्रीपतेः प्रीतिं जनयामासतुरेवं श्रीमदानंदतीर्थाख्यः सर्वज्ञः स एव सूर्यः श्रीपतिप्रतिपक्षगतमायावादतमोनिरसनाख्य

जगद्धितकरणेन श्रीपतेः प्रीतिं जनयामासेत्युक्तं भवति । यथा सूर्येण तमोव्याप्तं जगत् स्वप्रभयाभासते एवं तत्वदृशा पूर्णप्रज्ञाख्यसर्वज्ञसूर्येण मायावादतमोव्याप्तं जतत् इत्युक्तप्रकारेण श्रीपतिप्रीत्यर्थमवभासितमित्यर्थः । यच्चोक्तं द्रवत-द्रवताशुमायिनःप्रविशध्वमतंद्रितागुहाः । कमलारमणांबराश्रयःस-मुदेत्यखिलज्ञभास्करइति निर्गुणत्वनिराकारत्वप्रतिपादकं मायावादं निरस्य

गतः । भिन्नत्वेनात्मसादृश्यदो यदेति श्रुतेः सदा । मायावा-दतमोव्याप्तमिति तत्त्वदृशा जगत् । भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा । नमोऽमंदनिजानंदसांद्रसुंदरमूर्तये । इंदिरा-पतये नित्यानंदभोजनदायिने ॥ इति श्रीमदानंदतीर्थभगत्पा-दाचार्यविरचितमुपाधिखंडनं संपूर्णं ॥

यदा पश्यः पश्यते रुक्मवर्णमित्यादि श्रुत्युक्तप्रकारासिद्धं नारायणं नमति ॥ नम इति ॥ ॐ इति श्रीमदानंदतीर्थभगत्पादाचार्यविरचिता उपाधिखंडनटीका [तत्त्वप्रकाशटीका] श्रीपद्मनाभतीर्थभट्टारकविरचिता समाप्ता ॥

पुस्तकांतरानुपलब्धेरेकमेव पुस्तकं दृष्ट्वा मुद्रितमिदम् ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । हरिः- ॐ। पूर्णबोधकरसेवितपादं सज्जनेष्टदमनंतसद्गुणं । वासवीहृदयनंदनं हरिं बादरायणमहं भजे ऽनिशं ॥ १ ॥ भाविब्रह्मतया ऽम्नातानंदतीर्थानहं मुहुः । जयराजमुनींश्चापि वंदे वेदेशयोगिनः ॥ २ ॥ प्रणम्य यादवाचार्यगुरूणां पादपंकजे । तत्वप्रकाशिकाव्याख्यां व्याकुर्वे तत्कृपाबलात् ॥ ३ ॥ सर्वज्ञकल्पाष्टीकाकारा जयतीर्थश्रीमच्चरणास्तत्त्वप्रकाशिकापरपर्यायस्योपाधिखंडनस्य

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः॥
हरिः ॐ ॥ रमाया रमणं नत्वा गुणमाणिक्यमंडनं । तत्वप्रकाशिका-

व्याख्यां कर्तुकामाः स्वचिकीर्षितस्य ग्रंथस्य निर्विघ्नेन परिसमाप्त्यर्थं स्वेष्टदेवतानमस्काररूपं मंगलं मनसि कृत्वा शिष्यशिक्षायै ग्रंथादावुपनिबध्नंतः स्वचिकीर्षितं प्रतिजानते ॥ रमायारमणमिति ॥ अनेन सकलवाङ्मनसदेवताया रमाया अपि वंदनं कृतमिति ज्ञातव्यं। गुणा एव माणिक्यानि तान्येव मंडनान्यलंकारभूतानि यस्य स तथोक्तस्तं ॥ तत्वप्रकाशिकेति । श्रुतितन्मीमांसाशास्त्रप्रति-

पाद्यभूतं यत्परमपरं च तत्वं तत्प्रकाशयतीति तन्नामकस्य भगवत्पादकृतप्रकरणस्य व्याख्यामित्यर्थः । भगवत्पादीयग्रंथव्याख्याने सुराणामेवाधिकारात्कथं तत्र भवतां प्रवृत्तिरित्यत उक्तं ॥ यथामतीति ॥ नन्विदं प्रकरणमनारंभणीयं विषयादिशून्यत्वादित्याशंक्यास्य प्रकरणत्वात्प्रकरणस्य शास्त्रैकदेशसंबंधित्वाच्छास्त्रे यद्विषयादिकं तदेव अस्यापि प्रकरणस्य विषयादिकं भविष्यतीत्यभ्युपेत्यास्य शास्त्रस्य विषयादिकं दर्शयति ॥ परमात्मन इत्यादिना ॥

व्याख्यां करिष्यामो यथामति ॥ परमात्मनोऽत्यंतभिन्नस्य स्वतश्चिदानंदाद्यात्मकस्यापि जीवस्यानाद्यविद्याकामकर्मादिनिमित्तोऽयं परमार्थ एवा-

जीवपरमात्मनोर्भेदाभेदाविति भास्करः । तन्निराकरणायाह ॥ अत्यंतभिन्नस्येति ॥ दुःखाद्यनर्थस्याप्यानंदादिवत्स्वाभाविकत्वे प्रसादादपि तन्निवृत्त्यनुपपत्तिरित्यत उक्तं ॥ अविद्येत्यादि ॥ अविद्यादेरप्यन्यनिमित्तकत्वे निमित्तांतरपरंपरयाऽनवस्थापरिहारायोक्तमनादीति । अविद्या भावरूपा । कामो रागः । कर्म काम्यं निषिद्धं च । आदिपदेन मोहग्रहणं । अविद्याया अनादित्वं

स्वरूपेण । कामादेस्तु प्रवाहत इति द्रष्टव्यं । अन्यथाकारः स्वरूपापेक्षया ऽन्यथा प्रतीयमान आकारः । ननुदुःखाद्यनर्थरूपान्यथाकारस्य मिथ्यात्वे तदपरमार्थं स्वत एव निवर्तते । न तत्र परमेश्वरप्रसादापेक्षा । नहि शुक्तौ रजताद्यन्यथाकारनिवृत्तौ कस्यचित्प्रसादोऽपेक्षित इत्यत उक्तं । परमार्थ एवेति ॥ प्रसादादृत इति ॥ " यस्य प्रसादात्परमार्तिरूपात् " इति श्रुतेरिति भावः ॥ अविदितेति ॥ श्रवणादिना परोक्षत इत्यर्थः । तर्हि कथं तद्वेदनमपेक्षत

न्यथाकारो दुःखाद्यनर्थो न परमेश्वरप्रसादादृतेऽपगच्छति । नचासाक्षात्कृतोऽसौ प्रसीदति । नचाविदितस्वरूपः शक्यते साक्षात्कर्तुमिति सकलगुणाकरतया निश्शेषदोषगंधविधुरतया च तं प्रतिपादयितुमशेषाम्नायाः

इत्यत उक्तं ॥ सकलेति ॥ आकरः खनिः ॥ गंधेति ॥ लेशेत्यर्थः । " गंधः सौरभलेशयोः" इत्यमरः । कर्मकांडस्यापीश्वरज्ञानहेतुभूतकर्मप्रतिपादकत्वाद्ब्रह्मण्येव महातात्पर्यमित्याशयेनोक्तं ॥ अशेषेति ॥ "ब्राह्मणोपनिषन्मन्त्रभेदा वेदगिरोऽखिलाः " इत्युक्तेरित्यर्थः । तर्हि ब्रह्ममीमांसायाः किंकृत्यमित्यत आह ॥ तदुपकरणेति ॥ अर्थनिर्णयेतिकर्तव्यतारूपेत्यर्थः वेदार्थ-

निर्णयकरणीभूतन्यायग्रथनात्मकत्वाद्ब्रह्ममीमांसाया इति भावः । यथाहुः । "धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति" इति । न मायिमत इवायमर्थोऽसत्यः प्रतिपत्तव्य इत्याह ॥ इति परमार्थ इति ॥ सैद्धांतिकं रहस्यं तत्वमित्यर्थः । "तदुपकरणभूतब्रह्ममीमांसायाश्च प्रवृत्तिरिति तत्वम्" इति मायावादखंडनोक्तेरित्यवगंतव्यं ॥ ननु

प्रवर्तंते । तदुपकरणभूता च ब्रह्ममीमांसेति परमार्थः । अपरेतु स्वतः पर (ब्रह्मभू) मात्मभूतस्यैव जीवस्याज्ञानादिनिमित्तोऽयमपरमार्थ एवानर्थो ऽद्वैतज्ञानैकनिबर्हणीय इत्यतोऽस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदांता आरभ्यंते । तदितिकर्तव्यतारूपा ब्रह्ममीमांसा चेति

प्रकारांतरेण विषयादि प्रसक्तेरेवाभावाद्वेदतन्मीमांसाशास्त्रयोर्विषयादितत्वानिर्णयार्थमिदं प्रकरणमित्ययुक्तमित्यतः प्रकारांतरेण विषयादिप्रसक्तिं दर्शयति ॥ ॥ अपरेत्विति ॥ वेदांतानामात्मैकत्वं विषय इत्याह ॥ आत्मैकत्वाविद्याप्रतिपत्तय इति । प्रतिपत्तिशब्देन प्राप्तिर्विवक्षिता । ऐक्यज्ञानप्राप्त्यर्थमि- ॥ ७ ॥

त्यर्थः । अज्ञाननिवृत्तिः प्रयोजनमित्याह ॥ **अनर्थेति** ॥ अनर्थो दुःखादिः । तद्धेतोस्तदुपादानस्याज्ञानस्य । प्रहाणाय निवृत्तय इत्यर्थः । नन्वनर्थहेतो रज्ञानस्यप्रसादेनापि निवृत्तिसंभवात्किमात्मैकत्वज्ञानेनेत्यत उक्तं ॥ **अद्वैतज्ञानैकनिबर्हणीय इति** ॥ अज्ञाननिवृत्तिद्वारेत्यर्थः यतो ज्ञानमज्ञानस्यैव साक्षान्निवर्तकमित्यंगीकारादैक्यज्ञानेनोपादानभूतेऽज्ञाने निवृत्ते तत्कार्यं स्वयमेव नश्यतीति भावः । सत्यस्यैव निगडबंधादेर्निवृत्तौ प्रभुप्रसादापेक्षा नतु मिथ्याभूतस्य शुक्तिरूप्यादेरित्यभिप्रेत्योक्तं ॥ **अपरमार्थएवेति** ॥ अपरमार्थत्वे हेतुमाह ॥ **अज्ञानादिनिमित्तइति** । कारणमात्रवाची निमित्तशब्दोऽत्र तद्विशेष उपादाने पर्यवस्यति । तथाचाज्ञानोपादानकत्वान्मिथ्यात्वं । अज्ञानतत्कार्ययोरन्यतरत्वस्यैव मिथ्यात्वलक्षणत्वादिति भावः । ननु जीवे दुःखाद्यनर्थरूपबंधस्याज्ञानोपादानकत्वान्मिथ्यात्वं कुतोऽगीक्रियते । सत्यत्वमेव कस्मान्न स्यादित्यत उक्तं ॥ **स्वतः परब्रह्मभूतस्येति** ॥ तथाच जीवगतदुःखादिबंधस्य सत्यत्वे विरुद्धधर्माधिकरणत्वेन जीवब्रह्मणोरैक्यायोगादिति भावः । एवं विषयाद्याभासस्य प्रसक्तत्वात्तन्निराकरणेन स्वाभिमतविषयादिसमर्थनार्थमेतत्प्रकरणारंभो युक्तएवेत्याह ॥ **तमेतमिति** ॥ **स्वाभिमतमिति** ॥ गुणपूर्णो

भगवान्विषयः तज्ज्ञानं मोक्षश्च प्रयोजनं । योग्यस्तदिच्छुरधिकारी यथायोग्यं संबंध इति स्वाभिमतामित्यर्थः । नित्यशब्दार्थस्सदेति । एकशब्दार्थो मुख्येति । निलयशब्दार्थ आश्रय इति । मूर्तिः शरीरं । कंठतोऽनुक्तौ निमित्तमाह ॥ अभ्यर्हितत्वेनेति ॥ कमलाविशिष्टनारायणप्रीतेः स्वस्यैव मुख्यपात्रत्वेन स्वेषामिति

मन्यंते । तमेतं शास्त्रस्य पराभिमतमधिकारिविषयप्रयोजनसंबंधं निरस्य स्वाभिमतं समर्थयितुमिदं प्रकरणमारभमाणो भगवानाचार्यो नारायणस्तवनतत्प्रीतिप्रार्थनारूपमादितो मंगलमाचरति ॥ मूलं—नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः । अशेषदोषरहितः प्रीयतां कमलालयः ॥ अगण्यगुणानां नित्यैकनिलयः सदा मुख्याश्रयः आकृतिः मूर्तिर्यस्यासौ तथोक्तः । प्रीयतामस्माकमिति शेषः । अभ्यर्हितत्वेन

सिद्धत्वात् प्रमितत्वादित्यर्थः । यद्वा यथा भिक्षां देहीत्यादौ वाक्यप्रयोक्तृतया स्वस्यैव प्रकृतत्वेन सिद्धत्वान्ममेति नोच्यते एवमिहापि प्रीयतामिति वाक्यप्रयोक्तृत्वेन स्वेषामिति प्रकृतत्वेन सिद्धत्वादस्माकमिति नोक्तमित्यर्थः । न

न्वगण्यगुणेत्यादिविशेषणद्वयं किमर्थमिति चेत् । स्तुत्यर्थमिति ब्रूमः । तर्हि जगज्जन्मादिकर्तृत्वादिरूपविशेषणांतरेणापि स्तुतिसंभवादगण्यगुणेत्यादि विशेषणद्वयेनैव स्तुतौ किं प्रयोजनमित्यत आह ॥ **अत्राद्यमिति** ॥ **उत्तरेति** ॥ उत्तरप्रबंधस्योत्तरग्रंथस्य प्रसंगः प्रसक्तिः तस्योपक्षेपाय प्रारंभायेत्यर्थः । एतल्लक्षणद्वयस्य नारायणस्वरूपनिर्धारणहेतुत्वेऽनुव्याख्यानसंमतिमाह ॥ **यथोक्त-**

> सिद्धत्वादिदं नोक्तं । अत्राद्यं विशेषणद्वयं स्तुत्यर्थमप्युत्तरप्रबंधप्रसंगोपक्षेपाय कृतं । अथवा नानिर्धारितस्वरूपस्य प्रसादाशंसनं युक्तं न च लक्षणेन विना निर्धारणमिति लक्षणद्वयाभिधानमिदं । यथोक्तं । "अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेवहि । तावदेवेश्वरो नाम तत्र भेदोऽपि

तिति ॥ व्याख्यातं च सुधायां । "कियती सीमा परमात्मत्वस्येत्यत आह । अत इति । अशेषगुणोन्नद्धत्वं निर्दोषत्वं च प्रत्येकं निर्धारणहेतुत्वेनोक्तं । स्वमते ब्रह्मण ईश्वरातिरिक्तस्याभावं सूचयितुमीश्वर इत्युक्तं । इदं च लक्षणं ब्रह्मणः श्रुत्यादिसिद्धमिति हि शब्दार्थः । यावद्वस्तु अशेषगुणोन्नद्धं निर्दोषं

तावद्रामकृष्णादिरूपजातं वस्तु ईश्वरो नामेत्युक्ते समुदायैक्येन भेदाभेदावंगीकृताविति प्रतीयते । तन्निराकरोति । तत्रेति । क्वचिदिति । परस्परं परमात्मनाचेत्यर्थः ” इति ॥ प्रार्थनीयेति ॥ तस्याः सकलवाङ्मनसदेवतात्वादिति भावः । उत्तरप्रबंधप्रसंगोपक्षेपायेत्युक्तं । तद्दर्शयति ॥ अत्राहुरिति ॥ तत्

न क्वचित् ” इति । नारायणप्रीतिरिव रमायाः प्रीतिरपि प्राथनीयेति ज्ञापनाय कमलालय इत्युक्तं । अत्राहुरद्वैतवादिनः । जीवब्रह्मणोरेकत्वं खलु सकलवेदांततन्मीमांसाशास्त्रप्रतिपाद्यं । नच तन्नारायणाख्यस्य परब्रह्मणः सदाऽगण्यगुणाश्रयत्वे संभवति । अतादृग्रूपत्वाज्जीवस्य । नहि परस्परविरुद्धस्वभावयोरेकत्वं दृष्टं । अतो न स्वभावतोऽगण्यगुणाधिकरणत्वं नारायणस्येति । तदयुक्तं । स्यादिदं यदि जीवब्रह्मणोरेकत्वं शास्त्रार्थः स्यात् । नचैवं संभवति । तथात्वे शास्त्रस्यानारंभणीयत्वप्रसंगा

एकत्वं ॥ अतादृग्रूपत्वादिति ॥ नारायणवदनंतगुणाश्रयत्वाभावादिति भावः । अस्तु वा जीवस्यातादृग्रूपत्वं । तथाप्यैक्यमेव किं नस्यादित्यत आह ॥ नहीति । जलानलवदिति भावः ॥ स्वभावतः परमार्थतः ॥ शास्त्रस्य

वेदतन्मीमांसाशास्त्रस्य ॥ अद्वैतवादे अद्वैतासिद्धांते ॥ अज्ञानासिध्यधीनत्वा-
दिति ॥ अज्ञो ह्यधिकारी । अज्ञातो हि विषयः । अज्ञाननिवृत्तिः प्रयोजनमित्येवम-
धिकार्यादिसिद्धेरज्ञानासिध्यधीनत्वादित्यर्थः । ननु सर्वज्ञस्याज्ञताऽज्ञानाश्रयता
न घटत इति चेन्निराश्रयं निर्विषयमेवास्त्वज्ञानमित्यतस्तस्य साश्रयत्वादिनि-

त् । यत्खल्वधिकारिविषयप्रयोजनसंबंधवत्तदारंभणीयं दृष्टं । न चैतद
द्वैतवादे संभवति । अधिकार्यादिसिद्धेरज्ञानासिध्यधीनत्वात् । न च
तत्पक्षेऽज्ञानमुपपद्यते । कथमिति तत्राह ॥ **मूलं —अज्ञताऽखिलसं
वेत्तुर्घटते न कुतश्चन ॥** अज्ञानं हि कस्यचित्कचित्संभवति । नच
तत्पक्षे परमात्मातिरिक्तं वस्तु विद्यत इति तस्यैवाज्ञानं वक्तव्यं । नच
तस्य कुतश्चन कुत्रापि तत्संभवति । सर्वज्ञत्वात् । अतो व्यापकीभूता-

यमाह ॥ अज्ञानं हीति ॥ क्वचिद्विषये । अस्यास्मिन्नज्ञानमिति प्रतीतेरिति
भावः । ननु तर्हि जीवस्यैवास्त्वज्ञानं घटादिविषय इत्यत आह ॥ नच तत्पक्ष
इति ॥ वस्तु जीवाख्यं । कुतःशब्दः कुत्रेत्यर्थे चशब्दोऽप्यर्थ इत्यभिप्रेत्योक्तं ॥

कुत्रापीति ॥ विषय इत्यर्थः ॥ इत्यत्रेति ॥ परमात्मा अज्ञानाश्रयो न भवति । सर्वज्ञत्वादित्यनुमाने अन्वयव्याप्तौ दृष्टांतो नास्तीत्यर्थः । कुत इत्यत आह ॥ परमात्मनेति ॥ तस्य च पक्षत्वादितिभावः । यत्राज्ञानाश्रयत्वं तत्र सर्वज्ञत्वाभाव इति व्यतिरेकव्याप्तावपि दृष्टांतो नास्ति । कुत इत्यत आह ॥ अज्ञानाश्रयस्येति ॥ अन्यस्येति । परमात्मातिरिक्तस्येत्यर्थः । जडस्य जीवस्य च

श्रयविषयानुपपत्त्या व्याप्यस्याज्ञानस्याप्यनुपपत्तिः । ननु सर्वज्ञस्याज्ञता न घटत इत्यत्र नान्वयदृष्टांतः । परमात्मना विनाऽन्यस्य सर्वज्ञस्याभावात् । नापि व्यतिरेकदृष्टांतः । अज्ञानाश्रयस्यान्यस्य परेणानभ्युपगमात् । तत्कथमेतदिति । मैवं । यो यत्र ज्ञानवान्नासौ तत्राज्ञानवा

अज्ञानकल्पितत्वेनाज्ञानाश्रयत्वायोगात् । यथोक्तं । " आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर इति ॥ तथाचाज्ञानासिद्धौ तत्कल्पितजीवादिसिद्धिः । तत्सिद्धौ च तदाश्रिताज्ञानासिद्धिरित्यन्योन्याश्रयादिति भावः ॥ तत्कथमिति ॥ तथा

च दृष्टांताभावेन व्याप्तिग्रहणायोगात् व्याप्तिग्रहणसापेक्षप्रमितिसाधकत्वाभावा दनुमानं विरुद्धमिति भावः । "व्याप्तिग्रहणसापेक्षं प्रमितेः साधनं विदुः । अनुमानं" ॥ इति वचनादिति ज्ञातव्यं ॥ **सामान्यव्याप्तेरिति** ॥ सामान्यव्याप्तौ च घटादिज्ञानवान् देवदत्तो दृष्टांतः । तथाच सामान्यव्याप्तिमूलकमिदं सामान्यतो दृष्टानुमानमिति भावः । अनुमाने विरुद्धत्वमाशंकते ॥ **नन्वित्यादिना** ॥

**निति सामान्यव्याप्तेरविरोधात् । ननु सर्वं हि यो जानाति स सर्वज्ञः । तिस्रश्चास्य विधाः संभवंति । प्रमाणतो वा सर्वं जानीयाद्भ्रांत्या वा स्वभावसिद्धया प्रज्ञया वा । न चैता विधा विनाऽज्ञानेनोपपद्यंते । कूटस्थस्याज्ञानादृते प्रमातृत्वायोगात् । भ्रांतेश्चाज्ञानकार्यत्वात् स्वरूपप्रज्ञायाश्च**

**प्रमाणत इति** ॥ अंतःकरणवृत्त्येत्यर्थः । तस्या एव तन्मते प्रमाणत्वेन व्यवहारादिति ज्ञातव्यं ॥ **भ्रांत्यावेति** ॥ तथाच सर्वविषयकं ज्ञानं भ्रमरूपमित्याशयः । प्रमाणतः सर्वज्ञतांगीकारे परमात्मनः प्रमातृत्वं प्राप्तं । तच्चाज्ञानसापेक्षमित्याह ॥ **कूटस्थस्येति** ॥ निर्विकारस्येत्यर्थः । कूटमव्याकृताकाशः "कूटंखंविद

लं व्योम संधिराकाश उच्यत" इत्यभिधानात्। तद्वत्स्थितः कूटस्थः। सादृश्यं च निर्विकारत्वेनेति कूटस्थशब्देन निर्विकारत्वं लभ्यत इति ज्ञातव्यं। द्वितीयेऽप्य ज्ञानमावश्यकमित्याह ॥ **भ्रांतेश्चेति** ॥ **अज्ञानेति** ॥ अधिष्ठानाज्ञानाविशेषा दर्शनकार्यत्वादित्यर्थः। तृतीयेप्यज्ञानं स्वीकार्यमित्याह ॥ **स्वरूपप्रज्ञाया श्चेति** ॥ अज्ञानमंतरेणेत्यर्थः। संगतिः संबंधः। असंगत्वात्प्रज्ञायाः ॥ **असंगो**

नांतरेणाज्ञानमशेषार्थ संगतिः। असंगत्वात्। "असंगो ह्ययं पुरुषः" इति श्रुतेः। अतः सर्वज्ञताप्यज्ञानवत्तामाक्षिपत्येव परमात्मनो न प्रति क्षिपतीति। मैवं। मा भूत्प्रमाणेन मा च भूद्भ्रांत्या। स्वरूपज्ञानेनैव

**ह्येति** ॥ परमात्मनोऽसंगत्वे श्रुतिसिद्धेसति तत्स्वरूपभूतप्रज्ञाया अप्यसंगत्वं लब्धमेवेत्यर्थः। प्रमाणतः सर्वज्ञत्वं स्वभावसिद्धप्रज्ञया वेति प्रकारद्वयं अज्ञान सापेक्षमित्येतत् "स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितं। तच्चोभयं विना ऽविद्यासंबंधं नैव सिध्यति" इति तदीयवचनसिद्धं। भ्रांत्या सर्वज्ञत्वमप्यज्ञानसा पेक्षमित्येतदपि "भ्रांत्या सर्वज्ञताऽज्ञानंविनानैव हि सिध्यति" इति तद्वाक्यसिद्ध

मितिज्ञातव्यं । ननु स्वरूपज्ञानेनैव परमात्मनः सर्वज्ञतांगीकारेऽशेषपदार्थसंबंधवि रह रूपासंगत्वाविरोध इत्यत आह ॥ **असंगत्वमिति** ॥ **तत्कृतेति** ॥ शुभाशुभ पदार्थसंबंधकृतपुण्यपापरूपफललेपाभाव एवेत्यर्थः ॥ **ननु संबंधाविरह इति** ॥ संबंधविरहरूपत्वे व्याप्तत्वव्याघातः । युगपत्सर्वपदार्थसंबंधित्वस्यैव व्याप्ति पदार्थत्वात् । न च परममहत्परिमाणाश्रयत्वं व्याप्तत्वं । त्वया ब्रह्मणि तद नंगीकारात् । न च देशपरिच्छेदाभावो व्याप्तत्वं । असत्यातिव्याप्तेः । नच सत्वे

परमात्मनः सर्वज्ञतांगीकारात् । असंगत्वं तु तत्कृतफललेपाभावमात्रं ।
न (चसं) तु संबंधविरह एव । "यथाऽकाशस्थितो नित्यं वायुः" इत्यादि

सतीति विशेषणीयं । ब्रह्मणिस्वरूपातिरिक्तसत्ताभावात् । नच सर्वत्र विद्यमान त्वमेव व्याप्तत्वं । सर्वत्र विद्यमानत्वांगीकारे तत्संबंधस्यावर्जनीयत्वादितिभावः । तत्तत्फलेलपाभाव एव परमात्मनोऽसंगत्वमित्यत्र ज्ञापकमाह ॥ **यथाकाशेति** ॥ **तथाविधेति** ॥ लेपाभावरूपासंगत्वोपेतवायुरूपदृष्टांतेत्यर्थः । "यथाऽकाश स्थितो नित्यं वायुः सर्वत्रगो महान् । तथासर्वाणिभूतानि मत्स्थानीत्युपधारय"

इति गीतावाक्ये परमात्मनः स्वस्यासंगत्वे वायुर्दृष्टांततया भगवता कृष्णेनोपादीयते । तत्रवायोरसंगत्वं नाम न तत्तत्पदार्थसंबंधविरहरूपं । आकाशस्थितः सर्वत्रग इत्युक्तिविरोधात् । किंतु तत्तत्पदार्थसंबंधकृतलेपाभावरूपमेव । अतस्तद्दृष्टांतेन भगवतोप्यसंगत्वमुक्तरूपमेवेत्याशयः । प्रमाणजन्यज्ञानेन भ्रांत्या च सर्वज्ञत्वंविना स्वरूपज्ञानेनैव सर्वज्ञत्वं यदंगीकृतंतन्मूलोक्तमित्याह ॥ तदिद

तथाविधदृष्टांतोपादानात् । तादिदमुक्तम् ॥ अखिलसंवेत्तुरिति ॥ अत्र समित्युपसर्गेण भ्रांत्या सर्वज्ञतां वारयति । ताच्छीलकतृन्प्रत्ययेन प्रमाणजन्यतामिति स्वभावज्ञानेनैवोक्ता भवति । शंकते ॥ मूलं—उपाधि

मुक्तमिति ॥ तदुपपादयति ॥ अत्रेति ॥ वारयतीति ॥ समित्युपसर्गेण वेदनस्य प्रमाणरूपताया उक्तत्वादिति भावः ॥ ताच्छीलिकेति ॥ "आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" इत्यधिकृत्य "तृन्" इति सूत्रेण विहितो यस्तृन्प्रत्ययस्तेनेत्यर्थः । तथाच तृन्प्रत्ययांतेनसंवेत्तृशब्देनेति यावत् । प्रमाणजन्यतां वारयतीतिवर्तते ॥ इतिस्वभावज्ञानेनैवेति ॥ इत्येवं प्रमाणज्ञानेन

भ्रांत्या च सर्वज्ञत्वे निराकृतेसति स्वरूपप्रज्ञयैव सर्वज्ञतोक्ता भवतीत्यर्थः । ननू
पाधीनां परस्परंभेदेऽपि सर्वज्ञस्यकथमज्ञानमुपपद्यते । व्यधिकरणत्वादित्यत आह
॥ उपाधिनिमित्त इति ॥ अत्रोपाधिरंतःकरणादिरितिज्ञातव्यं ॥ जीवाश्र
यत्वेनि ॥ वाचस्पतिपक्षोयमितिज्ञातव्यं ॥ ब्रह्मणो न भिद्यत इति ।

भेदाद्धटत इति चेत् ॥ उपाधिनिमित्तो भेद उपाधिभेदः । घटतेऽज्ञतेति
संबंधः । यदुक्तंब्रह्मणोऽखिलसंवेत्तुरज्ञता न घटतइति तन्न । अज्ञानस्य
जीवाश्रयत्वाभ्युपगमात् । ननु जीवो ब्रह्मणो न भिद्यत इति ते मतं । सत्यं ।
तथाऽप्युपाधिनिभित्तो भेदोऽस्त्येव । तत्र यथा सत्यपि बिंबप्रतिबिंबयोरै
क्ये दर्पणाद्युपाधिनिमित्तभेदाद्बिंबस्यावदातत्वेऽपि प्रतिबिंबस्य श्यामता

तथाच ब्रह्मण्येवाज्ञानमंगीकृतंस्यात् । तथाचोक्तदोपस्तदवस्थ एवेति भावः ॥
अस्त्येवेति । जीवब्रह्मणोरिति शेषः । नन्वौपाधिकभेदसद्भावेऽपि जीवएवा
ज्ञानं कस्मादंगीक्रियते ब्रह्मण्येव किं न स्यादित्यत आह ॥ तत्रेत्यादिना
॥ तत्रौपाधिकभेदेसति ॥ अवदातत्वेऽपीति । निर्मलत्वेऽपीत्यर्थः ॥

श्यामता घटत इति ॥ उपाधेः प्रतिबिंबपक्षपातित्वादिति भावः ॥ उपाधि भेदादिति । अंतःकरणाद्युपाधेरपि प्रतिबिंबभूतजीवपक्षपातित्वादिति भावः । मूले स्वतएवेत्यस्य स्वभावत एवाकल्पितश्चेदित्यर्थः ॥ तथाचेति ॥ द्वीति

घटते एवं जीवब्रह्मणोः सत्यप्यभेदे ब्रह्मणः सर्वज्ञत्वेऽपि जीवस्याज्ञता घटत एवोपाधिभेदादिति । तदिदं दूषयितुं पृच्छति ॥ मूलं—सस्व-भावतः । अज्ञानतो वा । स्यादपीदं जीवाज्ञानमतं यद्युपाधिरुपपद्येत । स एव विविच्यतां । किंस्वभावतः अकल्पित इति यावत् । अज्ञानतो वा कल्पितइति शेषः । आद्यं दूषयति ॥ मूलं—द्वैतस्य सत्यता स्वत एव चेत् । तथाचापसिद्धांतः स्यादिति भावः । द्वितीयं निराकरोति ॥ मूलं—अनवस्थितिरज्ञानहेतौ ॥ अज्ञानहेतावीति तत्पुरुषो बहुव्री

भावप्रधानं तथाच द्वित्वसंख्यया इतं द्वीतं द्वीतमेव द्वैतं द्वितीयमित्यर्थः । तथाच द्वितीयस्योपाधेः सत्यत्वप्राप्त्या ऽद्वैतभंगापत्तिः स्यात् । तथाचापासि द्धांत इत्यथः ॥ तंत्रेणेति । सकृदुक्तमनेकोपकारकं तंत्रं तेन तंत्रन्यायेनेत्यर्थः

॥ अर्थादिति ॥ पूर्ववाक्यादनुवृत्तस्य स इत्यस्य यथाश्रुतप्रथमाविभक्त्यं तत्वे वाक्यार्थेऽन्वयायोगात्तदन्यथानुपपत्त्या सप्तम्यंतं संबध्यत इत्यर्थः। विग्रह द्वयमपि दर्शयति ॥ अज्ञानस्येति ॥ अनवस्थामुपपादयति ॥ उपाधिश्चेति ॥ ननूपाधेः कारणीभूताज्ञानसापेक्षत्वेऽपि नाज्ञानस्योपाधिसापेक्षत्वं तस्य । भेदमा त्रसापेक्षत्वादित्यत उक्तं ॥ सतिग्वल्पाधाविति ॥ नन्वेवमिति ॥ उपा

हिश्च द्वाव पितंत्रेणोपात्तौ स इति प्रथमांतं प्रकृतमप्यर्थादिह सप्तम्यंतं संबध्यते । अज्ञानस्य हेतावुपाधौ अज्ञानहेतुकेंऽगीक्रियमाणेऽनवस्थितिः स्यात् । सति खल्पाधौ तद्भिन्नस्य जीवस्याज्ञानं स्यात् । उपाधिश्चाज्ञाने सति स्यादज्ञानं चोपाधौ सतीति। नन्वेवमज्ञानोपाधिपरंपरैव स्यान्नानवस्थे

धेरज्ञानसापेक्षत्वेऽज्ञानस्यचोपाधिसापेक्षत्वे तस्याप्युपाधेः पुनरज्ञानसापेक्षत्वे ऽज्ञानोपाधिपरंपरैव स्यादित्यर्थः ॥ नानवस्थेति ॥ अनवस्थात्वेन दूषणं ने त्यर्थः । तथाच बीजांकुरादाविवेयमप्यनवस्था न दोषायेति भावः । बीजांकुरप रंपरा प्रामाणिकी । अतस्तत्रानवस्था न दूषणं अत्रत्वज्ञानोपाधिपरंपरा

ऽप्रामाणिकी त्यनवस्थादूषणमेवेत्याशयेन परिहरति ॥ **नेति** ॥ **असिद्धवि षयत्वेनेति** ॥ अप्रामाणिकत्वेनेत्यर्थः ॥ **अनवस्थात्वादिति** ॥ अनवस्था त्वेनदूषणत्वादित्यर्थः ॥ **प्रतीतीति** ॥ अज्ञानस्याहमज्ञ इति साक्षिरूपप्रतीति सिद्धत्वेन प्रामाणिकतया कार्यमेवाज्ञानकारणपरंपरां कल्पयिष्यतीति नास्याः परंपराया असिद्धविषयकत्वमित्यर्थः ॥ **आत्यंतिकभेदेनैवेति** । जीवेश्वरयो

ति चेन्न । असिद्धविषयत्वेनानवस्थात्वात् । अज्ञानं प्रतीतिसिद्धं परंपरां क ल्पयिष्यतीति चेन्न । आत्यंतिकभेदेनैव तस्योपपत्तेः । स्यादेवं यद्यज्ञानोपा धिव्यक्तिभेदः स्यात् । न चैवं एकमेवाज्ञानमुपाधिश्चेत्यंगीकारादिति चेत् ।

रत्यंतपारमार्थिकभेदमंगीकृत्य जीवे असत्यभूताज्ञानप्रतीतिनिर्वाहोपपत्तौ सत्यां अनंतोपाध्यादिव्यक्तिपरंपराकल्पने गौरवं स्यादित्यर्थः ॥ **स्यादेवमिति** ॥ उक्तरीत्याऽनवस्थेत्यर्थः ॥ **एकमेवेति** ॥ अज्ञानमेकमेव जीवे तद्घटकोपाधि श्चैक एवेति व्यक्तिद्वयमेवांगीकृतमित्यर्थः । उपाधिव्यक्तीनामज्ञानव्यक्तीनां चानंत्येऽनवस्थोक्ता । तस्मिन्नेव पक्षे अन्योन्याश्रयश्चोच्यत इति वाशब्दात्प्रती

यते । अतो व्याख्याति ॥ **वाशब्द इति** ॥ उपाधिव्यक्तीनामज्ञानव्यक्तीनां चानंत्येऽनवस्थोक्ता । उपाधिव्यक्तेरज्ञानव्यक्तेश्चैकत्वे अन्योन्याश्रय उच्यत इति पक्षभेदेन व्यवस्थितयोर्दूषणयोर्विकल्पे वाशब्दो वर्तत इत्यर्थः ॥ **अन्योन्येति** ॥ अज्ञानसिद्धौ तत्कल्पितोपाधिसिद्धिः तत्सिद्धौच तत्सिद्धिरित्यन्योन्या

एवं तर्हि मा भूदनवस्था अन्योन्याश्रयस्तु भविष्यतीत्याह ॥ **मूलं** — **वाऽन्योन्यसिद्धिना** । वाशब्दो व्यवस्थितविकल्पे । अन्योन्येन सिद्धिर्ययोस्तावन्योन्यसिद्धी । तद्भावोऽन्योन्यसिद्धिता । अज्ञानोपाध्यो रिति संबंधः । ननूपाधेरज्ञाननिमित्तकत्वेप्यज्ञानस्योपाधिहेतुकत्वाभावा त्कथमितरेतराश्रयः । भेद एव ह्युपाधिनिमित्तोंऽगीक्रियत इत्यत आह ॥

श्रय इत्यर्थः ॥ **भेद एव हीति** ॥ यद्यप्यज्ञानसिद्धौ तत्कल्पितोपाधिसिद्धिरित्यं गीकृतं । तथाप्युपाधिसिद्धावज्ञानसिद्धिरिति नांगीक्रियते । अज्ञानस्योपाधिक ल्पितत्वानंगीकारात् । किंतु जीवब्रह्मभेद एव ह्युपाधिनिमित्तक इत्येवांगीक्रियते । अतो नान्योन्याश्रय इत्यर्थः ॥ **निपातसमुदाय इति** ॥ "स्वरादिनिपातमव्य

पांद्यभूतं यत्परमपरं च तत्वं तत्प्रकाशयतीति तन्नामकस्य भगवत्पादकृतप्रकरणस्य व्याख्यामित्यर्थः । भगवत्पादीयग्रंथव्याख्याने सुराणामेवाधिकारात्कथं तत्र भवतां प्रवृत्तिरित्यत उक्तं ॥ यथामतीति ॥ नन्विदं प्रकरणमनारंभणीयं विषयादिशून्यत्वादित्याशंक्यास्य प्रकरणत्वात्प्रकरणस्य शास्त्रैकदेशसंबंधित्वाच्छास्त्रे यद्विषयादिकं तदेव अस्यापि प्रकरणस्य विषयादिकं भविष्यतीत्यभ्युपेत्यास्य शास्त्रस्य विषयादिकं दर्शयति ॥ परमात्मन इत्यादिना ॥

व्याख्या कारष्यामा यथामति ॥ परमात्मनोऽत्यंताभिन्नस्य स्वताश्चिदानंदाद्यात्मकस्यापि जीवस्यानाद्यविद्याकामकर्मादिनिमित्तोऽयं परमार्थ एवा-

जीवपरमात्मनोर्भेदाभेदाविति भास्करः । तन्निराकरणायाह ॥ अत्यंताभिन्नस्येति ॥ दुःखाद्यनर्थस्याप्यानंदादिवत्स्वाभाविकत्वे प्रसादादपि तन्निवृत्त्यनुपपत्तिरित्यत उक्तं ॥ अविद्येत्यादि ॥ अविद्यादेरप्यन्यनिमित्तकत्वे निमित्तांतरपरंपरयाऽनवस्थापरिहारायोक्तमनादीति । अविद्या भावरूपा । कामो रागः । कर्म काम्यं निषिद्धं च । आदिपदेन मोहग्रहणं । अविद्याया अनादित्वं

तदाश्रयमित्यर्थः । तथाचाज्ञानसिद्धौ उपाधिसिद्धिः तत्सिद्धौ च तद्भिन्ने जीवेऽज्ञानसिद्धिरिति चक्रकाश्रयो द्रष्टव्यः ॥ पूर्वत्रेति ॥ चक्रकापत्तिरथेत्येवं पूर्ववाक्यएव संबध्यत इत्यर्थः । तर्हि वाशब्दो व्यर्थ इत्यत आह ॥ वाशब्दे नेति ॥ पक्षांतर इति ॥ अंतःकरणादिकमेव जीवब्रह्मभेदहेतुभूतोपाधिरिति वाचस्पतिपक्षात् पक्षांतरे विवरणकारपक्ष इत्यर्थः । पक्षांतरमेव दर्शयति ॥

श्रयत्वादिकं पक्षांतरे सूचयति । तत्रेयमाशंका । स्यादेतदन्योन्याश्रयादिकं यद्यंतःकरणादिकमज्ञानादन्यदेवोपाधितयांगीक्रियते । न चैवं । अज्ञानस्योपाधितयांगीकारात् । नन्वविद्या किंसंबंधिनी भेदनिमित्तं ।

तत्रेयमाशंकेति ॥ अंतःकरणादिकमित्यत्रादिपदेन देहेंद्रियग्रहणं । नन्वज्ञानस्यैवोपाधि (हेतु)त्वे तस्यावश्यं भेदनिमित्तत्वं वाच्यं । तत्रासंबद्धस्यैव भेदनिमित्तत्वेऽतिप्रसंगात्संबद्धस्यैव भेदकत्वे वाच्ये किं प्रतिबिंबभूतं जीवं संबध्य भेदं करोति उत बिंबभूतं ब्रह्मेत्याशयेन सिद्धांती शंकते ॥ नन्वविद्येति ॥ उपाधिभूतदर्पणादिद्रव्यस्यापि मुखप्रतिमुखभेदनिमित्तत्वं तावदस्ति । तत्रासंब

द्धस्य भेदकत्वेऽतिप्रसंगात् संबद्धस्यैव भेदकत्वे वाच्ये किं बिंबभूतं मुखं संबध्य भेदं करोति उत प्रतिबिंबभूतं प्रतिमुखं । तत्र यदुत्तरं तदेव ममापीत्याशयेन मायावादी परिहरति ॥ दर्पणादिद्रव्यमपीति ॥ सिद्धांती गूढाभिसंधिरुत्तर माशंकते ॥ मुखमात्रेति ॥ दर्पणादिद्रव्यं बिंबभूतं मुखमात्रमेव संबध्य भेद निमित्तं भवति । न यत्किंचिद्धटादिकं संबध्येति मात्रशब्दार्थः । एवं सिद्धां त्याभिप्रेतं मात्रशब्दार्थमज्ञात्वा मायावादी बिंबप्रतिबिंबभूतंमुखप्रतिमुखानुस्यूत

दर्पणादिद्रव्यमपि किंसंबंधि भेदनिमित्तं । मुखमात्रसंबंधीतिचेत् इहापि
चित्स्वरूपमात्रसंबंध्यज्ञानं जीवब्रह्मभेदं करोति । स्वरूपमात्रसंबंधिनोऽप्य

मुखमात्रं मात्रशब्देनोक्तं सिद्धांतिनेति मत्वोत्तरमाह ॥ इहापीति ॥ चित्स्वरूपमात्रेति ॥ बिंबप्रतिबिंबभूतजीवब्रह्मानुस्यूतचिन्मात्ररूपस्वरूपमात्रेत्यर्थः । यथोक्तं विवरणकारेण । "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला । पूर्वसिद्धतमसोहि पश्चिमो नाश्रयो भवति नापि गोचर" इति । ननु जीव ब्रह्मानुस्यूतचिन्मात्ररूपस्वरूपमात्रं संबध्याज्ञानं स्वकार्यदुःखादिकं बिंबे कस्मान्न

दर्शयतीत्यत आह ॥ **स्वरूपमात्रेति** ॥ उपाधेः प्रतिबिंबपक्षपातित्वस्वाभाव्येन स्वभावस्यानपायादित्यर्थः । तत्र दृष्टांतो दर्पणादिवदिति । यथा मुख प्रतिमुखानुस्यूतमुखमात्रं संबध्यापि दर्पणादिकं स्वकार्यमालिन्यादिकं प्रतिमुख एव प्रदर्शयति नान्यत्र तद्वदित्यर्थः । इतीयमाशंकेत्यन्वयः ॥ **तदज्ञानमिति** ॥ उपाधिभूतमज्ञानमित्यर्थः ॥ **पूर्ववदिति** ॥ अन्तःकरणाद्युपाधेरज्ञानाकल्पित

ज्ञानस्य जीवभागपक्षपातिता दर्पणादिवद्युज्यत इति । तत्रापि वक्तव्यं तदज्ञानमज्ञानकल्पितमुत नेति । नेति पक्षे पूर्ववदपसिद्धांतः । आद्ये त्वात्माश्रयः स्यादिति । नन्वज्ञानं जीवब्रह्मभेदश्चानादिरेव । किंनामाज्ञा

त्वांगीकारे सत्यत्वप्राप्त्याऽद्वैतभंगापत्त्याऽपसिद्धांत उक्तः । तद्वदज्ञानरूपोपाधेरप्यज्ञानाकल्पितत्वांगीकारे ऽपसिद्धांत इत्यर्थः । स्यादितीत्यस्यात्माश्रयत्वं पक्षांतरे सूचयतीत्यनेनान्वयो द्रष्टव्यः । चिन्मात्राश्रिताज्ञानवादी जीवाश्रिताज्ञानवादी च शंकेते ॥ **नन्वज्ञानमिति** ॥ **अनादिरेवेति** "जीव ईशो विशुद्धा चिद्भेदस्तस्यास्तयोर्द्वयोः । अविद्यातच्चितोर्योगः षडस्माकमनादयः" इति

वचनादिति भावः ॥ आत्माश्रयादिकमिति ॥ दूषणमिति शेषः। अज्ञानस्यानादित्वेनाज्ञानकल्पितत्वाभावान्नात्माश्रयः। जीवब्रह्मविभागस्याप्यनादित्वेऽज्ञानकल्पितत्वाभावान्नान्योन्याश्रयोऽपीत्यादिशब्दार्थः। तथाचोत्पत्तिज्ञप्त्यप्रतिबंधकत्वान्नात्माश्रयादिप्रसंगो दूषणमिति भावः ॥ किंचिदुपकारेति ॥ उत्पत्तिज्ञप्तिरूपोपकारेत्यर्थः ॥ मृषात्वादिति ॥ तथा चाज्ञानाधीन एवेत्युक्तमसादिति भावः। नन्वज्ञानस्यानादित्वेनाज्ञानेनोत्पत्त्यभावेपि अज्ञानप्रयुक्तत्वां

नाधीन एवेति कथमात्माश्रयादिकमिति। मैवं। किंचिदुपकाराभावे तद
धीनताया एव मृषात्वात्। सद्भावे त्वात्माश्रयाद्यनिस्तारात् उत्पत्तिज्ञप्त्यो

गीकारान्नात्माश्रयः। तथानादित्वेऽपि द्रव्यगुणवत्त्वयोः प्रयुक्त्यादावन्योन्याधीनत्वसद्भावेऽपि यथा नान्योन्याश्रयः एवमज्ञानस्य जीवब्रह्मविभागस्य चानादित्वेनोत्पत्त्यादावन्योन्याधीनत्वाभावेऽपि प्रयुक्त्यादावन्योन्याधीनत्वांगीकारान्नान्योन्याश्रयोऽपीत्याशंक्याह ॥ सद्भावे त्विति ॥ प्रयुक्तिरूपोपकारसद्भावे त्वित्यर्थः ॥ आत्माश्रयेति ॥ उपपादयति ॥ उत्पत्तीति ॥

प्रयुक्त्यामेवेति शेषः । तथाचाज्ञानस्याज्ञानप्रयुक्तत्वांगीकारे प्रयुक्त्यामेवात्माश्रयः स्यादित्यर्थः । आदिपदेनान्योन्याश्रयादिग्रहणं । तथाहि द्रव्यत्वजातेर्व्यंग्यभूतायाः गुणित्वरूपव्यंजकप्रयुक्तत्वेऽपि न व्यंजकस्य व्यंग्यप्रयुक्तत्वं । व्यंग्यस्य घटादेः स्वज्ञानादावालोकरूपव्यंजकप्रयुक्तत्वेऽपि व्यंजकस्यालोकस्य घटादिप्रयुक्तत्वाभावादिति न तत्रान्योन्याश्रयः । इह तु जीवब्रह्मविभागस्याविद्याप्रयुक्तत्वादविद्यायाश्च जीवाश्रितत्वाज्जीवाज्ञाने अन्योन्यप्रयुक्ते इतिप्रयुक्तिप्रतिबंधकत्वादन्योन्याश्रयः स्यादेव । यथोक्तं । "अविद्याजीवयोर्यत्र ह्यपेक्षा तन्निरोधकः । अन्योन्याश्रयो नोचेदन्योन्याधीनताक्षतिः" इति । ननूत्पत्तिज्ञप्तिप्रतिबंधकात्माश्रयादेर्दोषत्वं नतु प्रयुक्त्यादिप्रतिबंधकात्माश्रयादेरित्यत आह ॥ उत्पत्तिज्ञप्त्योरेवेति । आदिपदेन प्रयुक्तिर्गृह्यते । प्रवृत्तिग्रहणं दृष्टांतार्थं । यथाहि स्वस्यैव स्वप्रवर्तकत्वे तत्प्रवर्त्यस्यैव तत्प्रवर्तकत्वेवा प्रवृत्तिप्रतिबंधादात्माश्रयादिकं । एवं स्वस्यैव स्वप्रयोजनकत्वे स्वप्रयुक्तस्य स्वप्रयोजकत्वे वा (स्व) प्रयुक्तिप्रतिबंधकत्वादात्माश्रयादिकं भविष्यत्येव । यथोक्तं । "यद्युत्पत्तिज्ञप्तिमात्रप्रतिबंधेन दोषता । तर्हि स्याच्चैत्रमैत्रादेरन्योन्यारोहणादिकम्" इति । आरोहणादिकमित्यत्र युगपदिति शेषः । आदिपदेन स्वकंधारोहण 10

ग्रहण । एवं चाज्ञानस्याज्ञानप्रयोजनकत्वे जीवब्रह्मविभागप्रयुक्तस्याज्ञानस्य जीवब्रह्मविभागप्रयोजकत्वेचात्माश्रयादिकं भविष्यत्येवेति भावः ॥ यथा सत्यपि बिंबप्रतिबिंबयोरैक्ये दर्पणाद्युपाधिनिमित्तभेदात् बिंबस्यावदातत्वेपि प्रतिबिंबश्यामताघटत इत्युक्तं दृष्टांतमपि दूषयति ॥ **बिंबप्रतिबिंबयोरिति** ॥ **अन्यत्रेति** । तत्वनिर्णय टीकादावित्यर्थः । तथाहि । बिंबप्रतिबिंबयोरैक्ये न तावत्प्रत्यक्षं मानं । इमे चैत्रतच्छाये भिन्ने इति वत् इमे चैत्रतत्प्रतिबिंबे भिन्ने इत्येवं पार्श्वस्थेन

रिव प्रवृत्त्यादेरपि प्रतिबंधेन तस्य दूषणत्वात् । बिंबप्रतिबिंबयोरभेदा भावस्यान्यत्रोपपादितत्वाद्दृष्टांतो निरस्त एव । अपर आह । स्यादिदं

ग्रहणात् । स्वेनापि मद्देहतत्प्रतिबिंबे भिन्ने इत्येव ग्रहणाच्च । सूर्यस्य पार्श्वे प्रति सूर्य इति वद्दर्पणे मम मुखच्छायेत्येवानुभवेन दर्पणे मम मुखं लग्नमिति कस्यापि प्रतीत्यभावाच्च । प्रतिबिंबमेव दृष्टं न चैत्रइत्यनुभावायोगाच्च । प्रतिमुखे प्रत्यङ्मुखत्वादिना दृश्यमानेऽपि मुखे तद्बुध्यभावाच्च । क्वचित्प्रतिमुखे मम मुखमिति व्यपदेशस्तु स्वच्छायाशिरसि स्वशिरोव्यवहारवत मार्गविन्यस्तपादादौ

स्वपाद्व्यवहारवच्च गौणः । भेदज्ञाने सत्यभेदव्यवहारस्य गौणत्वनियमात् । किंच बिंबप्रतिबिंबयोर्भेदसाक्षात्कारे तावन्न विवादः । अन्यथा त्वयापि कस्य भ्रमत्वमुच्यते । नच भेदं भेदकं च साक्षात्कुर्वन् अभेदंच साक्षात्कुर्वन् दृष्टः । ननु चैत्रो यत्स्वलक्षणो बहिः प्रतिपन्नस्तत्स्वलक्षण एव वेश्मांतास्थितो भाति । तथाच यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणमेव दर्पणस्थमपिभाति । नच तद्वस्त्वंतरत्वे युज्यते । तस्मादेक मेकदेशस्थं च मुखं भ्रांत्या भिन्नं भिन्नदेशस्थं च भातीति चेत् । उच्यते । किमनेन बिंबप्रतिबिंबयोरैक्ये तदेवेदं मुखमिति प्रत्यभिज्ञाप्रत्यक्ष मुपन्यस्तं उत बिंबप्रतिबिंबे अभिन्ने अत्यंतसदृशत्वादिति सादृश्यलिंगकानुमानं । नाद्यः । असिद्धेः । किंचित्स्वच्छताम्रादौ प्रतीते मुखसंस्थानविशेषाप्रतीत्या प्रत्यभिज्ञाभावस्य स्पष्टत्वात् । आदर्शप्रतीते स्वनेत्रगोलकादौ स्वस्याभिज्ञाया एवाभावेन प्रत्यभिज्ञायोगाच्च । नापि द्वितीयः । सव्येतरकरादौ व्यभिचारात् । वैधर्म्याभावो लिंगमस्त्विति चेन्न । प्रत्यक्पराग्भावादिरूपविरुद्धधर्मस्यैव सद्भावेनासिद्धेः । मुखे चलिते सति प्रतिमुखं चलतीति क्रियासाम्यं लिंगमस्त्विति चेन्न । छायादावनैकांत्यात् । ननु प्रतिबिंबं बिंबाभिन्नं बिंबकारणमात्रत्वादित्यनुमानमस्त्वितिचेन्न बिंबादर्वाचीने प्रतिबिंबे तस्यासिद्धेः । बिंबजननेन चरितार्थानां कार-

णानां कालांतरीय प्रतिबिंबजनकत्वांगीकारे विरम्य व्यापारप्रसंगात्। पृथग्दृष्टकार्यानुरोधेन परिवेषेंद्रचापच्छायाप्रतिसूर्यादाविव कारणस्य कल्प्यत्वात् । एतेन दर्पणादौ न प्रतिमुखरूपं व्यक्त्यंतरमस्ति कारणशून्यत्वाच्छशमस्तके विषाणवदिति निरस्तं । उक्तरीत्या कारणस्य कल्प्यत्वेनासिद्धेः । एतेनाभिज्ञायां भेदो भाति । प्रत्यभिज्ञायां त्वभेदः । तत्र भेदधीः प्रतिमुखरूपव्यक्त्यंतरे हेत्वभावेनोपपत्तिहीनत्वाद्भ्रांतिः । अभेदधीस्तु सोपपत्तिकत्वात्प्रमेति निरस्तं । अभेदधीरेव नास्तीत्युक्तत्वात् । छायादाविव कारणस्य कल्प्यत्वेन भेदबुद्धेः सोपपत्तिकत्वाच्च । एतेन "दर्पणाभिहताद्दृष्टिः परावृत्य स्वमाननम्। व्याप्नुवंत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्" इति निरस्तं । परावृत्य स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगात् । शिलाद्यभिहतनेत्रस्यापि स्वमुखग्राहकत्वापाताच्च । अस्यां प्रक्रियायां स्वच्छताया अनुपयोगात् । अथ नापि "नेक्षेतोद्यंतमादित्यं नास्तं यंतं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्" इति स्मृतिरेव बिंबप्रतिबिंबैक्ये मानं । उद्यदादित्यादौ बिंब इव वारिस्थमादित्यमिति वारिस्थेऽपि प्रतिबिंबे आदित्यशब्दप्रयोगादिति चेन्न । अस्य स्मार्तव्यवहारस्य गौणत्वात् । व्यपदेशमात्रस्य भेदप्रत्यक्षबाधकत.यां आदित्यो

यूप इत्यादावपि प्रसंगात् । त्वत्पक्षेऽपि हि वारिस्थशब्दो न मुख्यः । गगनस्थस्य वारिस्थत्वायोगात् । वारिस्थसूर्यदर्शननिषेधे तयोरभेदादाकाशगतसूर्यदर्शनस्यापि निषिद्धत्वप्रसंगाच्च । किंच बिंबप्रतिबिंबयोरैक्ये अयंप्रदेशो बिंबवान् प्रतिबिंबवत्त्वादिति प्रतिबिंबाद्बिंबानुमानं न स्यात् । साध्यवैशिष्ट्यापातात् । ननु तर्हि बिंबप्रतिबिंबयोर्भेदे प्रतिबिंबेकिंकाणमितिचेत् । अत्र ब्रूमः । बिंबरूपमुखसंनिधिवशादादर्श एव प्रतिमुखगर्भितः परिणमते । तथाचादर्श एवोपादानकारणं बिंबसन्निधानं निमित्तमिति । ननु तर्हि बिंबसन्निधिलब्धपरिणति विशेषो बिंबसान्निध्यपायेऽवतिष्ठेत । नहि निमित्तकारणनाशात्कार्यनाशोऽस्तीति चेन्न यथा बिंबसन्निधिरादर्शस्य प्रतिबिंबाकारपरिणतौ हेतुः एवं तदपायोप्यादर्शस्य विपरीताकारपरिणतौ हेतुः । विपरीतपरिणतौ तु प्रतिबिंबगर्भितता नश्यत्येव । यथाहि । सुवर्णरजतादीनां तुषमुषाग्निसंयोगादिनालब्धमेव द्रवावस्थानं तदपाये पुनर्घनीभावस्तथाऽत्रापीति । ननु निमित्तकारणनाशात्कार्यनाशो न दृष्ट इति चेन्न । यथा लोके समवायिकारणभूततंतुनाशात्कार्यभूतपटनाशो दृष्टः । यथावाऽसमवायिकारणभूततंतुद्वयसंयोगनाशात्पटनाशो दृष्टः । एवं निमित्तकारणनाशादपि कार्यनाशोंऽगीकर्तव्य एव । अपेक्षाबुद्धिनाशेन द्वित्व-

नाशदर्शनात् । एवं प्रतिबिंबस्यापि क्वचिदुपाधिनाशात्क्वचिद्बिंबनाशात्क्वचिदुभयनाशाच्च नाशोऽगीकर्तव्य एव । एवं च बिंबप्रतिबिंबयोरभेदाभावाद्भेद एव स्वाभाविक इत्यंगीकार्यमिति संक्षेपः । तथा चोपाधेः प्रतिबिंबपक्षपातित्वस्वभावकल्पनमप्यप्रामाणिकमिति भावः ॥ अपर आहेति ॥ भास्कर इत्यर्थः । मायावादिनां वाचस्पतिविवरणकारादीनां । अंतःकरणादीत्यादि-

मायावादिनां दूषणं नास्माकं । एकमेव ब्रह्म अंतःकरणाद्यनंतोपाध्यवच्छेदादनंतजीवभावमापद्यत इत्यंगीकारेऽपि भेदस्योपाधीनां चास्माभिर्मिथ्यात्वानंगीकारात् । भेदसत्यत्वांगीकारेऽपि स्वाभाविकभेदानंगीकारेणाद्वैत

पदेन देहेंद्रियादिकं ग्राह्यं । तर्हि भेदस्य सत्यत्वांगीकारापत्त्याऽद्वैतहानिः स्यादित्यत आह ॥ भेदसत्यत्वेति ॥ स्वाभाविकभेदानंगीकारेणेति ॥ भेदस्यौपाधिकत्वेन स्वाभाविकत्वानंगीकारेणेत्यर्थः ॥ अद्वैतवादेति ॥ अभेदः स्वाभाविक इत्यद्वैतवादेत्यर्थः । यदि भेदः स्वाभाविकः स्यात् तर्हि स्वाभाविकाद्वैतवादविरोधः स्यादिति भावः ॥ अज्ञानकल्पितत्वा-

भावेनेति ॥ उपाधेः सत्यत्वेनाज्ञानकल्पितत्वाभावादित्यर्थः । ननु बिंबप्रतिबिंबयोर्भेदस्य मिथ्यात्वात् तादृशयोर्जीवब्रह्मणोर्भेदस्य कथं सत्यत्वमित्यत आह ॥ अंशांशिभावेनेति ॥ जीवानां ब्रह्मांशत्वेन जीवब्रह्मणोरंशांशि-

त्वादाविरोधात् । उपाधेरज्ञानकल्पितत्वाभावेनानवस्थाद्यभावात् । अंशांशिभावेन बिंबप्रतिबिंबभावाभावात् । अतो ब्रह्मजीवसंबंधिनी सर्वज्ञत्वाज्ञत्वे न विरुध्येते इति तत्राह ॥ मूलं—भेदश्चोपाधितः कुतः ॥ मायावादे ह्युपाधेर्भेदस्य च कल्पितत्वेनानवस्थादिदोषप्रसक्तावप्युपाधिनिमित्तो भेदोऽवभास (त) इत्येतावानंशो युज्यते । अंगुल्यवष्टंभादिना चंद्रादिभेदाध्यासदर्शनात् । अस्मिंस्तु पक्षेऽनवस्थादिदोषाभावेऽप्युपाधितो भेदो भवतीत्येतन्न युज्यते । तदयोगे च जीवब्रह्माश्रयतयाऽज्ञतासर्वज्ञत्व

भावांगीकारेण तंतुपटवद्भेदाभेदांगीकारादिति भावः । अवभासपदं प्रतिभासपरं ॥ अंगुल्यवष्टंभादिनेति ॥ चक्षुषोंऽगुल्यवष्टंभरूपोपाधिनेत्यर्थः । चशब्दसमुच्चेयमाह ॥ तदयोग इति ॥ उपाधितो भेदजननायोगे सती-

त्यर्थः ॥ महारजनेति ॥ मंजिष्ठरूपं रक्तिमद्रव्यमित्यर्थः । अविद्यमानस्य भेदस्य ॥ कारकत्वाभाव इति ॥ उपाधेरिति शेषः । ननु महारजनाद्युपाधिः पटावयवस्य भेदकोऽङ्गीक्रियते । येन तदवयवस्य प्राक्सिद्धत्वेनो-

योर्व्यवस्थानं न युज्यत इति चशब्दार्थः । कुतः सत्योपाधितः सत्यभेदोत्पत्तिर्न युज्यत इत्यत आह ॥ मूलं—विद्यमानस्य भेदस्य ज्ञापको नैव कारकः ॥ उपाधिर्दृष्टपूर्वो हि । हिशब्दो हेतौ । यस्मान्महारजनाद्युपाधिर्विद्यमानस्यैव पटाद्यवयवभेदस्य ज्ञापक एव दृष्टपूर्वो न तु प्रागविद्यमानस्य कारकः अतो भेदश्चोपाधितः कुत इति संबन्धः । अत्रोपाधिः कारको न दृष्टपूर्व इत्येतावदेव वक्तव्यं । विद्यमानस्य ज्ञापक इत्युक्तिस्तु कारकत्वाभावे वैयर्थ्यं स्यादिति शंकानिरासार्थेति ज्ञातव्यं । नच महारजनादिः पटस्यैव भेदकः । द्वौ पटावि-

पाधिर्विद्यमानस्य भेदस्य ज्ञापक एव दृष्टपूर्वो न तु कारक इत्युक्तं युक्तं स्यात् । न चैवं । किंनाम पटरूपावयविन एव भेदकोऽङ्गीक्रियते । तथा च प्राग-

मिति भावः । इंद्रियेभ्यः पराह्यर्था इति श्रुतावविद्यादिशब्दाः अभिमान्यभि-

मित्याह ॥ मूलं—इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । स सर्वविदित्याद्युक्तं । तत किंत्यत आह ॥ मूलं—एतद्बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत । बुद्धिमानपरोक्षज्ञानी । कृतकृत्यो मुक्तः । मूलं—इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः । आत्मा

करणन्यायेन तत्तदभिमानिदेवतापरा इति ज्ञातव्यं । बुद्धेरात्मा परः आत्मनश्च महान् पर इति वैयधिकरण्येन योजनाशंकां परिहरति ॥ आत्मा महानितीति । बुद्धितत्वाभिमानिसरस्वत्यनंतरं महत्तत्वाभिमानिचतुर्मुखादर्वाक् अन्यस्योत्तम- 12

रूपोपाधिसंबंधाज्जीवरूपं दुःखाज्ञानादिभिर्विशिष्टमुत्पद्यत इत्यर्थः ॥ विनाश एवेति ॥ यथा दंडाद्युपाध्यपगमे तद्विशिष्टस्यैव नाशो दृष्ट एवमेवेत्यर्थः । शंकते ॥ जीव इति ॥ दुःखादिविशिष्टरूपे नष्टे सतीत्यर्थः ॥ स्वरूपमात्रेति ॥ विशेष्यमात्रेत्यर्थः ॥ तथोच्यत इति ॥ ब्रह्मैक्यापत्तिरित्युच्यत इत्यर्थः ॥ तर्हीति ॥ यथा देवदत्तरूपे विशेष्यमात्रे दंडाद्युपाधिसंबंधेन विशिष्टाख्यपदार्थांतरोत्पादस्तदपगमे तन्नाशश्च भवति एवमेव विशेष्यभूते चिन्मात्र

एव न ब्रह्मैक्यापत्तिरित्यापत्तेः । जीवे नष्टे स्वरूपमात्रावशेष एव तथोच्यत इति चेत् । तर्हि ब्रह्मण्येव बंधमोक्षावंगीकृतौ स्यातामित्युक्तदोषा-

एवांतःकरणाद्युपाधिसंबंधेन तत्कार्याज्ञानदुःखादिरूपबंधप्राप्त्या श्रवणादिसाध्यापरोक्षज्ञानेनोपाध्यपगमेऽज्ञानादिरूपबंधध्वंसस्यापि तत्र तत्रांगीकारप्रसंगः । बंधमोक्षयोः सामानाधिकरण्यनियमादिति भावः । नन्वंगीक्रियेते ब्रह्मण एव बंधमोक्षौ कोदोष इत्यत आह ॥ उक्तदोषेति ॥ अज्ञानरूपबंधांगीकारे "अज्ञता खिलसंवेत्तुर्घटते न कुतश्चन" इत्युक्तदोषापत्तिरित्यर्थः । दुःखरूपबंधांगीकारे

च आनंदादिरूपस्य दुःखादिकमपि न घटत इत्यपि द्रष्टव्यं। दृश्यत एवेत्यनंतरमिति शंकायामिति शेषः ॥ यदाऽऽकाश इति ॥ अव्याकृताकाश इत्यर्थः ॥ भेदो नास्तीति ॥ अंशांशिनोरंशानां चांशिनां च परस्परं चात्यंतभेदांगी-

पत्तिरिति । नन्वेकस्मिन्नेवाकाशे घटमठाद्युपाधिभिर्भेदः क्रियमाणो दृश्यत एव । नेत्याह ॥ मूलं—खेऽपि देशांतरस्य सः ॥ ज्ञापको विद्यमानस्य ॥ यदाऽऽकाशे भेदो नास्तीति सिद्धान्तः तदांतरशब्दो विशेषवचनः । ततश्च खेऽपि प्रागेव विद्यमानस्य देशविशेषस्य ज्ञापक एव स उपाधिरंगीक्रियते । नतु भेदस्य कारक इति नायं दृष्टांत इत्यर्थः । यदा तु घटमठाद्याकाशभेदाभ्युपगमस्तदा खेऽपि स घटाद्युपाधिः प्राग्विद्यमानस्यैव देशांतरस्य देशभेदस्य ज्ञापक एव नतु कारक इति

कारादित्यर्थः । खेऽपि अव्याकृताकाशेऽपि । देशांतरस्येत्यस्यार्थो देशविशेषस्येति । अयं अव्याकृताकाशः ॥ घटमठादीति ॥ भूताकाशे घटमठाद्यवच्छिन्नाकाशे न भेदाभ्युपगम इत्यर्थः। खेऽपि भूताकाशेऽपि ॥ भेदो नामेति ॥

भेदो नामान्योन्याभावः। सच भवन्मते वस्तुस्वरूपमेवेत्यर्थः । स भेदः। तद्दर्शनेनैव वस्तुदर्शनेनैव । ननु तर्हि वस्तुस्वरूपदर्शन एवोपाध्यपेक्षाऽस्त्वित्यत आह ॥ **नचेति** ॥ उपाध्यप्रतीतावपि स्वरूपप्रतीतेरिति भावः। कथमनेनोक्तशंकापरिहार इत्यतस्तदुपपादयति ॥ **अस्तीत्यादिना** ॥ **तद्विशेष इतीति** ॥

योज्यं । ननु भेदो नाम वस्तुस्वरूपमेव । स तद्दर्शनेनैव दृश्यः । नचोपाधेः स्वरूपदर्शने उपयोगोऽस्ति । तत्कथमुच्यते उपाधिर्भेदस्य ज्ञापक इति तत्राह ॥ **मूलं—मूढबुद्ध्यपेक्षया** ॥ अस्ति भेदस्य वस्तुस्वरूपत्वं तथापि तद्विशेष इति प्रतिपादितमन्यत्र । ततो वस्तुप्रतीतावपि भेदाप्रतीतिरभेदप्रतीतिश्च युज्यते । तदा भेदज्ञापनेऽस्त्येवोपाधेरुपयोग

धर्मिणा न निर्विशेषात्यंताभिन्नः किंतु सविशेषात्यंताभिन्न इत्यर्थः ॥ **तत इति** ॥ धर्मिणा सविशेषाभेदांगीकाराद्विशेषस्य च भेदकार्यकारित्वादित्यर्थः ॥ **अभेदप्रतीतिश्चेति** ॥ वस्तुस्वरूपत्वादित्यर्थः ॥ **तदेति** ॥ मूढानां वस्तुप्रतीतावपि यदा भेदो न प्रतीयते तदेत्यर्थः ॥ **भेदज्ञापन इति** ॥ अनेन ॥ २३ ॥

मूढबुद्धिव्यपेक्षया खेऽपि देशांतरस्य भेदस्य स उपाधिर्ज्ञापक इत्यन्वयो द्रष्टव्य इति सूचितं भवति । ज्ञानिनां तु वस्तुप्रतीतेरेव भेदप्रतीतित्वेन न तान्प्रत्यु-

इति । नन्वाकाशे विद्यमानस्यैव भेदस्योपाधिर्ज्ञापक इति कस्मादंगीकार्यं । अविद्यमानस्योत्पादक एव कस्मान्नांगीक्रियत इति । तत्राह ॥ **मूलं—नचेदुपाधिसंबंध एकदेशेऽथ सर्वगः ॥** यद्युपाधिर्विद्यमानस्यैव भेदस्य ज्ञापक इति नेष्यते किंत्वविद्यमानस्यैव कारक इत्यंगीक्रियते तदेवं वक्तव्यं । किं घटाद्युपाधिराकाशसंबंधी तद्भेदं करोति उतासंबद्धः । द्वितीयेऽतिप्रसंगः । आद्येऽपि वाच्यं स उपाधिसंबंध आकाशस्यैकदेशे वर्तते उत सर्वाकाश इति । आद्ये दोषमाह ॥ **मूलं—एकदेशेऽनवस्था स्यात् ॥** चेदुपाधिसंबंध इति वर्तते । यदि घटाद्युपाधिसंबंधो गगनैकदेशवर्तीत्युच्यते तदा तस्याप्याकाशैकदेशस्यौपाधिकत्वं

पाधिर्भेदज्ञापनोपयुक्त इत्याशयेन मूढबुद्धिव्यपेक्षयेत्युक्तमिति ज्ञातव्यं ॥ आकाशसंबंधीति ॥ आकाशेन संबद्धः सन्नाकाशभेदं करोतीत्यर्थः । अति-

प्रसंग इत्युक्तातिप्रसंगविवरणं स्वयमेव करिष्यति ॥ उपाध्यंतरानंगीकृता-विति ॥ स्वकृतैकदेश एव स्वयं संबध्यत इत्यंगीकृताविल्यर्थः । कृत्स्नस्य सर्वस्या-

वक्तव्यं । सोऽप्युपाधिरुपाध्यंतरकृतैकदेशे संबंध्य भेदक(र) इत्यनवस्था । उपाध्यंतरानंगीकृतावात्माश्रयः स्यात् । द्वितीयं दूषयति ॥ मूलं—
**सर्वगश्चेन्न भेदकः** ॥ यद्युपाधिसंबंधः सर्वाकाशगतः स्यात्तदाऽसौ नाकाशभेदस्य कारकः स्यात् । कृत्स्नस्यैकोपाधिनैव ग्रस्तत्वात् । इद मुक्तं भवति । असंबद्धस्योपाधेरवच्छेदकत्वे काश्मीरस्थेन महारजनेन केरलवर्तिनो वाससोऽवच्छेदप्रसंगात्संबद्ध एवोपाधिर्भेदक इति वक्तव्यं । घटाकाशसंयोगश्चाकाशे व्याप्यवृत्तिश्चेत्सर्वाकाशस्य घटाकाशत्वादाका-शभेदहेतुर्न स्यादिति प्रदेशवृत्तिरित्यंगीकार्यं । तस्य च प्रदेशस्योपाधि-कृतत्वेऽनवस्थादिप्रसंगात्स्वाभाविकत्वमेवैष्टव्यं । तथाच प्राक् सिद्धस्या-

प्याकाशस्य । द्वितीयेऽतिप्रसंग इत्युक्तातिप्रसंगं विवृणोति ॥ असंबद्धस्येति ॥ अवच्छेदकत्वे भेदकत्वे । काश्मीरकेरलौ देशविशेषौ । अवच्छेदो भेदः । प्रदेश-

न ग्राह्यः ॥ प्राक्सिद्धस्येति ॥ स्वाभाविकत्वेनोपाधिसंबंधात्प्रागपि सिद्धस्ये-त्यर्थः । ननु प्रदेशवृत्तित्वं नाम नांशवृत्तित्वं । येन तस्यौपाधिकत्वे अनवस्था-प्रसंगात्स्वाभाविकत्वमंगीकर्तव्यं स्यात् । किंनामान्यदेव इति तटस्थो नैयायिकः

काशभेदस्योपाधिना कर्तुमशक्यत्वादुपाधिर्विद्यमानस्यैव भेदस्य ज्ञापको विज्ञायत इति । प्रदेशवृत्तित्वं नाम स्वात्यंताभावसमानाधिकरणत्वमिति चेन्न । तस्य विरुद्धत्वात् । प्रतीतत्वादविरोध इति चेन्न । आकाशभेद-वादिनं प्रति प्रतीत्यसिद्धेरिति । सत्योपाधिकृतसत्यभेदवादे दोषांतरं

शंकते ॥ प्रदेशवृत्तित्वं नामेति ॥ तस्य विरुद्धत्वादिति ॥ भावाभा-वयोः सामानाधिकरण्यस्य विरुद्धत्वादिति भावः ॥ प्रतीतत्वादिति ॥ एकस्मिन्नेवाकाशे इह पक्षी नेह पक्षीति पक्षिसंयोगतदत्यंताभावयोः प्रतीत-त्वान्न विरोध इत्यर्थः ॥ आकाशभेदवादिनं प्रतीति ॥ भूताकाशांशानाम-

न्योन्यभेदवादिनं प्रतीत्यर्थः । अंशभेदेन वैयधिकरण्येनैव संयोगतदत्यंताभावप्रतीत्योर्निर्वाहान्नैकाधिकरण्यज्ञापकं प्रतीतेः किंचिदस्तीति भावः ॥ व्याप्तीति ॥ तर्के अनुमाने चेत्यर्थः। इदं चोत्तरत्र विवरिष्यते । न चेदुपाधिसंबंध इत्यादिनौपाधिकत्वस्य दूषितत्वात्कथंचिदित्युक्तं । स्वरूपैक्य इत्यनूद्य स्वाभा-

चाह ॥ मूलं—सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः । दृश्यो हि ॥ हिशब्दो व्याप्तिसूचनार्थः । भवतु वाऽऽकाशादिभेदः कथंचिदौपाधिकः । जीवब्रह्मणोर्जीवानां च भेदस्तु स्वाभाविक एवांगीकार्यः । स्वरूपैक्ये स्वाभाविकैक्ये सुखदुःखादिभोगस्य भेदेन दर्शनं न स्यात् । संप्रतिपन्नैकात्मवत् । ये तु मिथ्योपाधिनिमित्तो भेदभ्रम

विकैक्य इति व्याख्यातं। जीवब्रह्मणोरिति वर्तते। सुखदुःखादिभोगो भेदेनन दृश्यत इत्यस्य तात्पर्यतो व्याख्यानं सुखदुःखादिभोगस्येति । भोगोऽनुभवोऽनुसंधानंतस्येत्यर्थः ॥ भेदेनेति ॥ व्यवस्थयेत्यर्थः ॥ भेदभ्रम इतीति ॥ जीवब्रह्मणोर्जीवानां च भेदो भ्रांतिकल्पित इति वदंतीत्यर्थः ॥ व्यवस्थेति ॥

सुखदुःखादीनां भेदेन दर्शनमित्यर्थः ॥ घटेतापीति ॥ त्वन्मते तूपाधेर्जीव-
ब्रह्मणोर्जीवानां च भेदस्य दुःखादीनां च सत्यत्वाद्व्यवस्था नैव युज्यत इति
भावः । तद्भेदात्तेषां धर्माणां भेदात् ॥ अंतःकरणभेद इति ॥ तदाधार-
भूतांतःकरणेत्यर्थः । रूपादिधर्माणां भेदे तदाधारस्य घटादेर्भेदाभावात्कथंचि-

इति वदंति तेषां सुखदुःखादीनामपि मिथ्यात्वात्काल्पनिकी व्यवस्था
घटेतापि । ननु सुखदुःखाद्योऽतःकरणधर्मास्तद्भेदात्कथंचिदंतःकरणभेदः
साध्यतामात्मभेदे तु किमायातमित्याशंकापरिहाराय भोग इत्युक्तं । न
वयं सुखादिभेदादात्मभेदं साधयामः । किंनाम स्वरूपाभेदे सुखाद्यनु-
संधानं स्यादिति ब्रूमः । एतेनैतदपि निरस्तं । यत्केन चिद्व्यवस्थान्य-
थानुपपत्त्या भेदमाशंक्योक्तं न तावद्धर्मभेदो व्यवस्था । धर्मभेदेऽपि

दित्युक्तं ॥ अनुसंधानं स्यादिति ॥ तथाच सुखादेरंतःकरणधर्मत्वेऽपि तद-
धीनानुसंधातृत्वस्यात्मनि सद्भावात्सुखाद्यनुसंधातृत्वाननुसंधातृत्वलक्षणाद्विरु-
द्धधर्मादात्मभेदो भविष्यत्येवेति भावः ॥ उक्तमिति ॥ व्यवस्थाशब्दार्थ-

विकल्पेन दूषितमित्यर्थः । तत्र किं धर्मभेदो व्यवस्था भिन्नाश्रयधर्मभेदो वा विरुद्धधर्मभेदोवेति विकल्पान्हृदि निधायाद्यं दूषयति ॥ नतावदिति ॥ सुखदुःखादिरूपधर्मभेदान्यथानुपपत्त्या धर्मिणोर्जीवानां च भेद इत्ययुक्तं । धर्मभेदे धर्मिभेद इति नियमस्यायुक्तत्वादित्याह ॥ धर्मभेदेऽपीति ॥ रूपादिधर्मभेदेऽपि धर्मिणो घटस्यैकत्वेन व्यभिचारादित्यर्थः । द्वितीयं निराचष्टे ॥ नापीति ॥ भिन्नाश्रया देवदत्तयज्ञदत्तादिरूपभिन्नाश्रया ये धर्माः सुखदुःखा-

धर्मिणो भेदाप्रतीतेः । नापि भिन्नाश्रयधर्मभेदः । इतरेतराश्रयप्रसंगात् ।
नच विरुद्धधर्मभेदः । ऐकात्म्यवादिनं प्रति सुखादीनां विरोधासिद्धेरि-

दयः तद्भेदो व्यवस्था । तेन धर्मिणां भेदसिद्धिरित्यर्थः । रूपादीनांभिन्नाश्रयत्वाभावान्नोक्तदोष इति भावः ॥ इतरेतरेति ॥ धर्मिणां भेदसिद्धौ धर्माणां भिन्नाश्रयत्वसिद्धिः । तत्सिद्धौ च भिन्नाश्रयधर्मभेदाद्धर्मिभेदसिद्धिरितीतरेतराश्रयप्रसंगादित्यर्थः । तृतीयं प्रत्याचष्टे ॥ न च विरुद्धेति ॥ ऐकात्म्येति ॥ विरोधो नाम सहानवस्थानं । जीवब्रह्मैक्यवादिमते सुखदुःखयोरैकात्म्यनिष्ठत्वस्यैव

सद्भावेनोक्तरूपविरोधस्यैवभावादित्यर्थः । एतेनेत्युक्तं विशदयति ॥ सुखदुः
खादीति ॥ तथाच सुखदुःखाद्यनुसंधानभावाभावरूपव्यवस्थान्यथानुपपत्त्या
जीवब्रह्मणोर्जीवानां च भेदसाधनं युक्तमेवेत्याशयः ॥ एतदिति ॥ सुखदुःखादी-
त्यर्थः ॥ किमंशानामिति ॥ जीवब्रह्मणोः स्वाभाविकैक्ये परस्परं सुखदुः-
खाद्यनुसंधानं स्यादित्यापाद्यमानानुसंधानं किमंशानां जीवानामापाद्यते उतां-

ति । सुखदुःखाद्यनुसंधानभावाभावरूपव्यवस्थाया अंगीकृतत्वात् ।
नन्वेतदनुसंधानं किमंशानामापाद्यते उतांशिनः । नाद्यः । व्याप्त्यभा-
वात् । हस्तगत(स्य)सुखस्य पादगतेनाननुसंधानात् । न द्वितीयः ।

शिनो ब्रह्मण इत्यर्थः ॥ व्याप्त्यभावादिति ॥ यत्र स्वाभाविकैक्यं तत्रांशानां
परस्परं सुखदुःखाद्यनुसंधानमिति व्याप्त्यभावादित्यर्थः । तमेवोपपादयति ॥
हस्तगतेति ॥ हस्तावच्छेदेन ज्ञायमानस्य सुखस्येत्यर्थः । पादगतेनांशेन ।
तथाच हस्तपादगतयोरंशयोः स्वरूपैक्ये सत्यपि परस्परं सुखदुःखाद्यनुसंधाना-
भावाद्व्यभिचार इत्यर्थः । ननु तत्राप्यस्ति परस्परं सुखदुःखाद्यनुसंधानमिति

न व्यभिचार इति चेन्न । तत्राप्यनुसंधानांगीकारे हस्ते मे सुखं पादे मे दुःख-
मिति नियतावच्छेदकप्रतीतिरनुपपन्ना स्यात् । किं तर्हि उभयत्रोभयं प्रतीयेत ।
||२७|| तथाच पादोऽपि सुखावच्छेदकः स्यात् हस्तोऽपि दुःखावच्छेदकः स्यादिति
भावः ॥ तस्येति ॥ स्वरूपैक्ये अंशिनो ब्रह्मणः सुखाद्यनुसंधानं नापादयितुं
शक्यते । अनुसंधानं नाम भोगः । अंशिनश्च भोगापादनं न युक्तं । आनंद-
रूपस्य तस्य बाह्यसुखादिभोगसाधनीभूतांतःकरणाद्यभावेनाभोक्तृत्वादित्यर्थः ।

तस्याभाक्तृत्वादिति । मैवं । उभयथाऽप्यदोषात् । नहि तत्तद्भोगायत-

नन्वंशानामापाद्यत इति पक्षे पादे मे सुखमित्यादिनियतावच्छेदक(ताक)प्रती-
तिर्न स्यादित्यत आह ॥ नहीति ॥ संक्रांतिस्साधारण्यं । स्वानवच्छेद्यस्या- ||२७||
प्यवच्छेदकत्वमिति यावत् । कर्मणि षष्ठी । स्वेनानवच्छेद्यं प्रतीत्यर्थः ।
पादानवच्छेद्यसुखं प्रति पादोऽपि अवच्छेदकः स्यादित्यर्थः । ततश्चायमर्थः ।
ब्रह्मांशानां देवदत्तयज्ञदत्तादीनां स्वरूपैक्ये परस्परं सुखदुःखाद्यनुसंधानं स्या-
दित्यापाद्यस्य यज्ञदत्तोपाधिर्देवदत्तीयसुखावच्छेदकोऽपि स्यात् । देवदत्तोपाधि-

श्च यज्ञदत्तीयसुखावच्छेदेकोऽपि स्यादिति यद्यर्थो विवक्षितः स्यात्तदा परमुक्तो व्यभिचारः संगच्छेत । न चैवं । किंतु तत्तदुपाधिगतचैतन्यस्यैव तत्तदवच्छिन्नसुखाद्यनुसंधानं स्यादिति । तच्च हस्तपादगतांशयोरप्यस्त्येव । अन्यथा पादतललग्नकंटकोद्धरणाय हस्तव्यापारो न स्यात् । ननु पुत्रादिदुःखपरिजिहीर्षया कृपया पित्रादेः प्रवृत्तिवदुपपन्न इति चेन्न । पित्रादिप्रवृत्तौ पुत्रादिदुःखज्ञापकतदीयाक्रंदनादिरूपज्ञापकसद्भावादत्र तदभावादिति संप्रदायः । अन्ये तु । स्वरूपैक्ये अंशानामनुसंधानं स्यादिति विकल्पस्यायमभिप्रायः । यदांशानामनुसंधानमापाद्यते तदा हस्तरूपांशं प्रति पादगतजीवांश आयातीत्यंगीकार्यम् । अन्यथा हस्तगतांशनिष्ठसुखानुसंधानं विप्रकृष्टस्य पादगतांशस्य न स्यात् । तथाच यदा पादगतांशो हस्तगतांशं प्रति समायाति तदा तस्य स्वायतनं पादं विहायागमनासंभवादायतनभूतः पादोऽप्यायातीत्यंगीकार्यं । तथाच तत्तद्भोगायतनानां परस्परमितरांशसंबंधप्राप्त्यानुसंधानं स्यादिति । व्याप्त्यभावमेवोपपादयति ॥ हस्तगतस्येति ॥ हस्तावच्छिन्नांशगतस्येत्यर्थः । पादगतेन पादावच्छिन्नांशेन । हस्तस्वरूपांशं प्रत्यागत्येति शेषः । आद्यपक्षे दोषाभावमुपपादयति ॥ नहीति ॥ संक्रांतिरितरांशसंबंधः । उक्तरीत्यासंक्रांत्यापादनपूर्वक-

मनुसंधानं नापाद्यत इत्यर्थ इत्याहुः ॥ अस्त्येवेति ॥ अन्यथा पादतललग्नकंटकोद्धाराय हस्तव्यापारो न स्यादित्यर्थः । अंशिनोऽनुसंधानमापाद्यत इति द्वितीयपक्षेऽपि न दोषः । ननूक्तं किल तस्याभोक्तृत्वादिति । तन्न । स्वरूपैक्येंऽशिनः सुखादिभोगो नापादयितुं शक्यते । तस्याभोक्तृत्वात् । तथाच बाध इति हि तवाभिप्रेतं । तदयुक्तं । यदि वयं स्वरूपैक्येनांशिनो ब्रह्मणः सुखादिभोगं साधयामः तदा परं बाधाभिधानं संगच्छेत । न चैवं । किंत्वा-

नानां संक्रांतिरापाद्यते । किंतु सुखाद्यनुसंधानमात्रं । तदंशानामस्त्येव ।
भोक्तृभूतांशवतोंऽशिनोऽभोक्तृत्वासिद्धेश्च । अतीतसुखादाविवाऽननुसं-

पादयामः । तत्र च बाधोऽलंकारएवेति परिहारे स्थितेऽपि प्रतिवादिस्खलितं नोपेक्षामर्हतीत्याशयेन तस्याभोक्तृत्वादित्युक्तं दूषयति ॥ भोक्तृभूतेति ॥ अंशांशिनोरभेदेनांशानां भोक्तृत्वेन तादृशांशवतस्तदभिन्नस्येति यावत् । अंशिनोऽभोक्तृत्वमेवासिद्धमित्यर्थः । ननु यदिस्वरूपैक्यंस्यात्तदा सुखाद्यनुसंधानं स्यादित्यत्रापाद्यमानं सुखाद्यनुसंधानं नाम सुखादेर्वर्तमानतयानुभवः तथा

स्मरणं वा वक्तव्यं । नान्यत् । तथाचात्मनोऽतीतसुखानुभवः स्मरणं वा तावदिदानीं जायते । तत्र व्यभिचारः । प्रतीतसुखानुभवितुरात्मनः स्वरूपैक्ये सत्यपि अतीतसुखादेर्वर्तमानतयाऽनुभवस्मरणयोरभावाद्व्यभिचार इत्याशयेन शंकते ॥ **अतीतसुखादाविवेति** ॥ **ब्रूम इति** ॥ येन व्यभिचारः स्यादिति भावः । तर्ह्यनुसंधानशब्दार्थो वक्तव्य इत्याशंकते ॥ **किंनामेति** ॥ उत्तरमाह

धानं किं न स्यादिति चेत् । नहि वयं वर्तमानतयाऽनुभवं स्मरणं वाऽनुसंधानं ब्रूमः । किंनाम स्वीयतयानुभवमात्रं । नच तन्नास्त्यतीतसुखादाविति । तदयं प्रसंगार्थः । यदि जीवब्रह्मणी जीवाश्च स्वभावतोऽभिन्नाः स्युः

॥ **स्वीयतयेति** ॥ तथाचातीतसुखादावपि स्वसत्तासमये स्वीयतयानुभवसद्भावान्न व्यभिचार इति भावेनाह ॥ **नच तदिति** ॥ अतीतसुखादौ तत् स्वीयतयाऽनुभवमात्रं नास्तीति न किंत्वस्त्येवेत्यर्थः । वर्तमानतयेत्यस्य व्यावृत्त्यर्थो मात्रशब्दः । फलितं दर्शयति ॥ **तदयमिति** ॥ एकपदं चैतत् सचासावयंचेति तदयं सोयमित्यर्थः । यद्वा तदिति भिन्नं पदं । तस्मादित्यर्थः ॥ **प्रसं-**

गार्थ इति ॥ प्रसंगरूपस्य सुखदुःखादिभोगश्चेति वाक्यस्यार्थ इत्यर्थः । यत्र स्वाभाविकोऽभेदः तत्र स्वगतसुखादिविषये स्वीयतयाऽनुभववत्त्वमिति व्याप्ति-
॥२९॥ मभिप्रेत्य तत्र दृष्टांतमाह ॥ **यथा संप्रतिपन्न इति** संप्रतिपन्न एकात्मा देव-दत्त इत्यर्थः । तत्र स्वेन स्वाभाविकैक्यमस्ति । स्वगतदुःखादिविषये स्वीय-तयाऽनुभवोऽप्यस्तीति द्रष्टव्यं । व्यतिरेकव्याप्तिं दर्शयति ॥ **यो येनेति** ॥

तदाऽन्योन्यगतसुखदुःखादिविषये स्वीयतयाऽनुभववंतः स्युः यथासंप्रति-पन्न इति । विमताः परस्परैक्यरहिताः चेतनत्वे सत्यन्योन्यगतसुखदुः-खाद्यनुसंधानशून्यत्वात् । यो येनैक्यवान् चेतनः स तत्सुखाद्यनुसंधान-

**संप्रातिपन्न इति** ॥ संप्रतिपन्नैकात्मा देवदत्तः स्वयं स्वेनैक्यवान्स्वगतसुखाद्यनु-
संधानवांश्च भवतीत्यर्थः ॥ **सूचितमिति** ॥ सुखदुःखादिभोगो भेदेन दृश्यत ॥२९॥
इत्यनेन सुखाद्यनुसंधानशून्यत्वं न दृश्यत इत्यनेन सुखाद्यनुसंधानं सूचित-मित्यर्थः । ननु घटस्य घटेनैक्ये विद्यमानेपि सुखाद्यनुसंधानाभावाद्व्यभिचार इत्यत आह ॥ **चैतन्यावच्छिन्नत्वादिति** ॥ तथाच चेतनत्वे सति यो

यनैक्यवानिति व्याप्तेरभिप्रेतत्वाद्धटे व्यभिचाररूपक्षुद्रोपद्रवो नास्तीत्यर्थः । तर्के उपाधिमाशंकते ॥ नन्विति ॥ दृष्टांतस्थले संप्रतिपन्नैकात्मनि प्रयोजक उपाधिः। अनेन साध्यभूतापाद्यव्यापकत्वमुक्तं भवतीति द्रष्टव्यं॥ ननु स्वरूपैक्यमात्रमिति ॥ उपाधिभेदाभावविशिष्टं वस्तुस्वरूपैक्यमेवानुसंधाने प्रयोजकमित्यर्थः । उपाधिभेदाभावमात्रस्यैव प्रयोजकत्वे गर्भस्थस्यापि पितृमातृ-

वान् यथा संप्रतिपन्न इत्यनुमानं वाऽनेन सूचितं । चैतन्यावच्छिन्नत्वाद्व्याप्तेर्न कश्चित्क्षुद्रोपद्रवः । ननु दृष्टांतस्थलेऽनुसंधानस्योपाधिभेदाभावः प्रयोजको न तु स्वरूपैक्यमात्रं । प्रकृते तूपाधिभेदसद्भावात्कथमनुसंधान-

गतसुखाद्यनुसंधानापत्तिः स्यात् अतः स्वरूपैक्यमपि प्रयोजकं । गर्भस्थस्य तु मात्रा स्वरूपैक्याभावान्नानुसंधानमिति भावः । आपादकीभूतानुसंधानाव्यापकत्वं दर्शयति ॥ प्रकृते त्विति ॥ पक्षभूतेषु जीवेष्वित्यर्थः । अनुकूलतर्काभावान्नानुसंधानमिति भावः । परस्परं सुखाद्यनुसंधानशून्यत्वमस्तु परस्परैक्यराहित्यं च मास्त्वित्यप्रयोजकं चानुमानमित्याह ॥ कथं चेति ॥ अन्य-

निमित्तस्येति ॥ उपाधिभेदाभावनिमित्तकस्येत्यर्थः । नैमित्तिकस्यानुसंधानस्याभावो हि निमित्ताभावं कल्पयति । प्रकृते त्वनुसंधाने न स्वरूपैक्यमात्रं निमित्तं । किंतूपाधिभेदाभावविशिष्टं । तथाच नैमित्तिकस्यानुसंधानस्याभावेन कल्प्यमाननिमित्तरूपविशिष्टाभाव उपाधिभेदाभावेनैवोपपद्यत इति स्वरूपैक्याभावानंगीकारे बाधकं किमपि नास्तीत्यप्रयोजकतेति भावः ॥ पूर्ववाक्येनेति ॥

प्रसंगः । कथं चान्यानिमित्तस्यानुसंधानस्याभावात्स्वरूपैक्याभावानुमानमित्यत आह ॥ मूलं—उपाधिभेदेऽपि ॥ पूर्ववाक्येन संबंधः । अनेनानुसंधानं प्रत्युपाधिभेदाभावो न प्रयोजकः । किंनाम स्वरूपैक्यमेवेत्युक्तं भवति । तत्कुतो ज्ञायत इत्यत आह ॥ मूलं—हस्तपादादिगो

॥३०॥ उपाधिभेदेऽपि सुखदुःखादिभोगो भेदेन न दृश्यः । सुखाद्यनुसंधानमस्तीति यावदिति पूर्ववाक्येन संबंध इत्यर्थः ॥ न प्रयोजक इति ॥ सत्यप्यनुसंधाने उपाधिभेदाभावो नास्तीति व्यभिचारादित्यर्थः ॥ तदिति ॥ व्यभिचारात्प्रयोजको न भवतीत्येतत् कुतो ज्ञायत इत्यर्थः ॥ अस्यापीति ॥ हस्तपादा-

दिगो यथेति वाक्यस्यापि सुखदुःखादिभोगश्चेति पूर्ववाक्येनैव संबंध इत्यर्थः ॥ अन्यथेति ॥ अनुसंधाने उपाधिभेदाभावस्यैव प्रयोजकत्व इत्यर्थः ॥ भोगानुसंधानं न स्यादिति ॥ तथाचानुसंधाने सत्यपि उपाधिभेदाभावाद्व्यभिचार इत्यर्थः । उपाधिभेदेऽपि हस्तपादादिगो यथेत्येतत् । पूर्ववाक्येनैव संबंधं

यथा ॥ अस्यापि पूर्वेणैव संबंधः । स्वरूपैक्ये सति हस्तपादाद्युपाधीनां भेदे सत्यप्यनुसंधानदर्शनात्तदेव प्रयोजकं । नोपाधिभेदाभाव इति ज्ञायते । अन्यथोपाधिभेदाद्धस्तपादादिगतसुखादिभो(गानुसंधानं न स्या)गएकस्य न स्यात् । अत उपाधिभेदेऽपि हस्तपादगतसुखादिभोगवत्स्वरूपैक्ये सर्वोपाधिगतोऽसौ भेदेन न दृश्यतेति । अथापि स्यात् ।

दर्शयन्व्याख्याति ॥ अत इति ॥ सर्वोपाधीति ॥ देवदत्तयज्ञदत्तादिसर्वोपाधीत्यर्थः । असौ सुखादिभोगस्तदनुसंधानमिति यावत् । तथाचानुसंधाने उपाधिभेदाभावस्य व्यभिचारेण प्रयोजकत्वाभावेन स्वरूपैक्यस्यैव प्रयोजकतया अन्वयव्यतिरेकाभ्यां च निर्णीतत्वादनुसंधानाभावेन परस्परं स्वरूपैक्या-

भावानुमानं नाप्रयोजकं। नापि तर्कः सोपाधिकः। साध्यभूतोपाध्यव्यापकत्वा-दित्युक्तं भवतीति द्रष्टव्यं। संश्लिष्टोपाधित्वं उपाधिमत्त्वं विश्लिष्टोपाधिभेदाभाव इत्यर्थः ॥ प्रकृत इति ॥ हस्तपादादिगतसुखाद्यनुसंधानमेकस्यात्मनो युक्तं। संश्लिष्टोपाधित्वाद्विश्लिष्टोपाधिभेदाभावाज्जीवब्रह्मणोर्जीवानां च विश्लि-

संश्लिष्टोपाधित्वमनुसंधाने प्रयोजकं तदभावात्प्रकृते नानुसंधानमिति चेत्। किमुपाधिसंश्लेषमात्रं प्रयोजकमुत स्वरूपैक्ये सति। नाद्यः मातृसुखादेर्गर्भस्थेनानुभवप्रसंगात्। न द्वितीयः। स्वरूपैक्यमात्रस्य प्रयोजकत्वे संभवति विशेषणप्रक्षेपे प्रमाणाभावात्। दोषांतरंच सूचयति ॥ **मूलं—नानादेहगभोगानुसंधानं योगिनो यथा ॥** स्वरूपैक्यसद्भावाद्विश्लिष्टनानादेहगतसुखाद्यनुसंधानं सौभर्यादियोगिनो दृष्टमिति

ष्टोपाधिमत्त्वान्नानुसंधानमित्यर्थः। प्रयोजकमनुसंधाने ॥ प्रसंगादिति ॥ तत्रापि विश्लिष्टोपाधिभेदाभावसद्भावादित्यर्थः ॥ दोषांतरंचेति ॥ प्रयोजनाभाव एको दोषः स्वैरुक्तः। व्यभिचाररूपदोषांतरं सूचयतीत्यर्थः। मूले

व्यभिचारस्थलोक्त्याव्यभिचारः सूचित इति भावः । तदेव स्वरूपैक्यमेव । उपाधिसंश्लेषः संश्लिष्टोपाधिभेदाभावः ॥ अन्यथेति ॥ विश्लिष्टोपाधिभेदाभावस्यैवानुसंधानप्रयोजकत्व इत्यर्थः । ईश्वरे मनःप्रणिधानं योगः ॥ न स्यादिति ॥ विश्लिष्टोपाधीनामेव सत्त्वेन विश्लिष्टोपाधिभेदाभावाभावेन व्यभि-

तदेवानुसंधाने प्रयोजकं नोपाधिसंश्लेषोऽपीति ज्ञायते । अन्यथा योगप्रभावोत्पादितानेकशरीरगतसुखाद्यनुसंधानं योगिनो न स्यात् । अतो योगिनः स्वरूपैक्यादुपाधिषु विश्लिष्टेष्वपि यथा नानादेहगतसुखादिभोगानुसंधानं तथा प्रकृतेऽप्यापाद्यत एवेति । स्यादेतत् । परबुद्धेरप्रत्यक्षत्वाद्योगिनो नानादेहगतभोगानुसंधानं कुतः सिद्धमित्यत आह ॥

चारादिति भावः । मूलं योजयति ॥ अत इति ॥ अनुसंधाने विश्लिष्टोपाधिभेदाभावस्याप्रयोजकत्वादित्यर्थः । यथेत्यनंतरं मूलेऽध्याहार्यमाह ॥ तथेति ॥ देवदत्तयज्ञदत्ताभिधोपाधिषु विश्लिष्टेष्वपि सुखाद्यनुसंधानमापाद्यत एवेत्यर्थः ॥ कुतः सिद्धमिति ॥ अस्माकं कुतः प्रमाणात्सिद्धमित्यर्थः । अस्मदीयप्रत्यक्षे-

णैव सिद्धमित्याशंकापरिहारायोक्तं ॥ परबुद्धेरिति ॥ योगीश्वरानुसंधानेऽस्मदीयप्रत्यक्षाप्रवृत्तेरित्यर्थः ॥ पुराणेऽप्विति ॥ यथोक्तमाग्नेयपुराणे । "सौभरिश्च महायोगी पंचाशज्जन्मसंस्मृतिं । दिव्यज्ञानेन विज्ञाय भाविजन्मफलं पुनः । एकदैव फलं भुङ्क्त्वा पंचाशज्जन्मकर्मजं । स्वेच्छयैव ततः शुद्धो राहुमुक्त इवोडुप" इति । तस्य सौभार्यादियोगिनः ॥ तदिच्छैवेति ॥ युगपदनेकशरी-

मूलं—न चेद्भोगानुसंधानं तदिच्छा योगिनः कुतः ॥ इच्छापूर्वं खलु योगिनोऽनेकशरीरोपादानं पुराणेषु पठ्यते । तत्र यदि योगिनोऽनेकशरीरगतसुखाद्यनुसंधानं न स्यात् तदा तस्य तदिच्छैव न स्यात् । शरीरोपादानस्य प्रयोजनांतराभावात् । अप्रयोजनस्य प्रेक्षावता

रगतसुखादिभोगानुसंधानायानेकशरीरोपादानेच्छैवेत्यर्थः ॥ प्रयोजनांतरेति॥ सुखाद्यनुसंधानव्यतिरेकेण प्रयोजनांतराभावादित्यर्थः । निष्प्रयोजनमपि शरीरोपादानमिच्छंति योगिन इति चेत्तत्राह ॥ अप्रयोजनस्येति ॥ अत इति ॥ अनेक शरीरोपादानेच्छान्यथानुपपत्त्येत्यर्थः । ननु योगिनः सुखाद्यनुसंधाना-

साधनमपि देहबाहुल्यं सुखाद्यनुसंधानार्थमिच्छंति विवेकज्ञानाभावादिति चेत्तत्राह ॥ **न च योगिन इति** ॥ अविवेकिनो भ्रांताः ॥ देहबाहुल्यार्थ-

निवर्तिष्यमाणत्वात् । अतो ज्ञायतेऽस्त्यनुसंधानमिति । नच योगिनोऽविवेकिनः । येनानुसंधानासाधनमपि देहबाहुल्यं तदर्थमिच्छंतीति कल्पयामः । अथोच्येत । न योगिनोऽनेकशरीरोपादित्सयाऽनेकशरीरगतसुखाद्यनुसंधानमेकस्य कल्पयितुं शक्यते । देहबाहुल्यार्थमेवेच्छोपपत्तेः । नच तस्य वैयर्थ्यादप्रयोजकत्वं । कर्मक्षयाय भोगार्थत्वात् । भोगश्च विनाप्यनुसंधानेन तत्र तत्र तद्गतांशैः शक्यते कर्तुमिति । तत्राह ॥ **मूलं—अनुसंधानरहितदेहबाहुल्यमन्यथा ॥ सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः** ॥ न योगिनोऽनुसंधानेन विना केवलदेहबाहुल्यार्थमेवेच्छेति कल्पयितुं शक्यते । तथा सत्यनुसंधा-

मेवेति ॥ न सुखाद्यनुसंधानायेत्येवार्थः । तस्य देहबाहुल्यस्य । तत्र तत्र तस्मिंस्तस्मिन्देहे । मूले अन्यथेत्यनंतरमपिशब्दोऽध्याहार्य इत्यभिप्रेत्यान्यथेत्यस्या-

॥३३॥ र्थमाह ॥ **योगित्वेन विनापीति** ॥ अयोगिष्वस्मदादिष्वित्यर्थः ॥ **कथमयोगिन इति** ॥ एकस्यात्मनोऽस्मदादेः एक एव देहः प्रमितः । अतः कथं देहबाहुल्यं सिद्धमित्यर्थः ॥ अंगीकृतत्वादिति ॥ तथा चैकस्यात्मनो देव-

नरहितदेहबाहुल्यस्य योगित्वेन विनापि विद्यमानत्वाद्योगिनोऽनेकशरीराधिष्ठातृत्वमिति विशेषो न स्यात् । अस्ति चासौ । तेन ज्ञायते न शरीरबाहुल्यमात्रायेच्छा योगिनः । किंतु तद्गतभोगाद्यनुसंधानार्थेति । कथमयोगिनोऽपि शरीरबाहुल्यं सिद्धमित्यत उक्तं तत्पक्ष इति । सर्वशरीरगतचेतनानां स्वभावतोऽभेदस्य परेणांगीकृतत्वादिति । अथ मन्येत । एकस्यैव योगिनोनेकशरीरगतसुखाद्यनुसंधानाभवेऽपि योगिन एवानेकशरीरत्वमिति विशेषो युज्यते । तेषां शरीराणां तत्कर्म-

दत्तस्य देहबाहुल्यं सिद्धमित्यर्थः ॥ योगिन एवेति ॥ तथाचानुसंधानरहितदेहबाहुल्यं योगित्वं विनाऽयोगिनोऽपि सिद्धमित्युक्तमसदिति भावः । तेषां शरीराणां योगीश्वरगृहीतशरीराणां ॥ तत्कर्मफलभोगेति ॥ तच्छरीरापाद- ॥३३॥

कयोगीश्वरीयकर्मफलभूतसुखाद्यनुभावार्थत्वादितीत्यर्थः । नन्वनुसंधानाभावे भोगोऽनुपपन्न इति चेत्तत्राह ॥ भोगस्य चेति ॥ अनुसंधानेन विनापीति ॥ देहांतरैरननुभूतसुखाद्यनुसंधानेन विनापि योगिन उपपत्तेरित्यर्थः । विशेषो योगिनः कुत इत्युक्तदोषमयोगिष्वयंप्रकारो न संभवती त्याशयेन परिहरति ॥ न चैवमिति ॥ देहबाहुल्यस्य देवदत्तकर्मफलभोगार्थताऽस्ती-

फलभोगार्थत्वात् । भोगस्य चानुसंधानेन विनाप्युपपत्तेः । नचैवं सकलदेहगतचेतनानां स्वभावतोऽभेदेपि देहबाहुल्यस्यास्ति देवदत्तकर्मफलभोगार्थतेति । तदेतदसत् । सर्वदेहगतात्मनां देवदत्ताभेदेन सर्वकर्मणामपि देवदत्तसंबंधित्वापत्त्या सर्वदेहानां देवदत्तकर्मफलभोगार्थ-

त्येवं भवद्भिर्न वक्तव्यमित्यर्थः । यथा एकस्यैव योगिनो देहबाहुल्यं तत्कर्मफलभोगार्थम् एवमेकस्यैवायोगिनो देवदत्तस्य यज्ञदत्तादिदेहबाहुल्यं तत्कर्मफलभोगार्थमिति वक्तुं न शक्येत । तत्तत्कर्मणां भेदे यज्ञदत्तादिशरीराणां यज्ञदत्तकर्मफलभोगार्थत्वेन देवदत्तकर्मफलभोगार्थत्वादिति भावः । सर्वकर्मणां

विविच्य घटाद्युपाधयो ज्ञापयंतीत्यंगीकर्तव्यं । स्वतः सिद्धप्रदेशविशेषाभावे घटाद्युपाधिराकाशस्य संयोगो न स्यात् । एकदेशवृत्तित्वात्संयोगस्याकृत्स्नाकाशवृत्तिघटसंयोगस्य मठाकाशे न स्यात् । घटेनैव कृत्स्नाकाशस्य ग्रस्तत्वात् । उपाध्यंतरकल्पिताकाशस्यैकदेशवृत्तित्वे घटसंयोगसंबद्धस्याप्युपाध्यंतरकल्पितैकदेशवृत्तित्वमित्यनवस्था स्यात् । एतदाकाशप्रदेशात्संबद्धस्यात्र घटस्यात्रघटा

स्वेऽपि देशान्तरस्य सः । ज्ञापको विद्यमानस्य मूढबुद्धिव्यपेक्षया । न चेदुपाधिसंबंध एकदेशोऽथ सर्वगः । एकदेशोऽनवस्था स्यात्सर्वगश्चेन्न भेदकः । सुखदुःखादिभोगश्च स्वरूपैक्ये न

काशव्यवहारजनकत्वे देशांतरस्थघटस्यात्र घटाकाशव्यवहारजनकत्वं स्यादित्यर्थः । सुखदुःखादिव्यवस्थान्यथानुपपत्त्या अमरनरादीतराकाशभेदः स्वाभाविक एव । नतूपाधिकल्पित इत्याह ॥ सुखदुःखादिभेदस्येत्यादिना ॥ अथाचेतनस्योक्तत्वेन शिरश्चरणादिभेदेऽपि तत्तद्गतसुखदुःखाद्यनुसंधानं दृश्यते पादे वेदनेति । यथा सौभर्यादेर्योगप्रभावेन बहुशरीरग्रहणसमर्थस्य नानादेह-

त्यर्थः । तत्सिद्धौ चेत्यादि व्याख्याति ॥ **उपाधिभेदासिद्धाविति** ॥ उक्तादेव हेतोरिति ॥ स्वरूपाभेदेन तद्भेदस्य कर्मभेदे निमित्तत्वानुपपत्तेरुपाधिभेदं विना तद्भेदे निमित्तांतराभावादित्यर्थः ॥ **व्यक्तिभेदादिति** ॥ यथा बीजादंकुरमंकुराद्बीजमिति सामान्येनान्योन्यसापेक्षतया अन्योन्याश्रयप्राप्तावपि न बीजांकुरव्यक्तिभेदादन्योन्याश्रयः एवं कर्मोपाधिसामान्ययोरन्योन्यसापेक्षत्वे-

भावात् । उपाधिभेदासिद्धावेव कर्मभेदसिद्धिरुक्तादेव हेतोः । ततश्चान्योन्याश्रयान्नैकमपि सिध्यति । कर्मोपाधिव्यक्तिभेदान्नान्योन्याश्रय इति चेत् । तथाप्यनवस्था स्यात् । अनादित्वान्नेति चेन्न । असिद्धविषयत्वेन मूलक्षतेः । कर्माण्युपाधयश्च विभिन्ना एव दृश्यंत

ान्योन्याश्रयप्राप्तावपि कर्मोपाधिव्यक्तिभेदान्नान्योन्याश्रय इत्यर्थः ॥ **अनवस्थेति** ॥ बीजांकुरव्यक्तिभेदमंगीकृत्य परंपरांगीकारे यथाऽनवस्था तथेत्यर्थः ॥ **अनादित्वादिति** ॥ बीजांकुरव्यक्तिभेदेन प्राप्ताऽनवस्था यथाऽनादित्वान्न दोष एवमिहापीत्यर्थः ॥ **असिद्धविषयत्वेन मूलक्षतेरिति** ॥ अप्रामाणिकविषयत्वेनेत्यर्थः । यदर्थमुत्तरोत्तरानुसरणं तन्मूलमुत्पत्तिर्ज्ञप्तिर्वा । युक्तं बीजां-

कुरस्थलेऽनादित्वेनानवस्थाया अदोषत्वं । मूलभूतांकुरोत्पत्तेः प्रत्यक्षसिद्धत्वेन प्रामाणिकतया परंपराकल्पकसद्भावात् । तदकल्पने च मूलक्षतिप्रसंगात् । नचैवं प्रकृते संभवति । चैतन्याभेदपक्षे कर्मोपाधिव्यक्तिभेदरूपमूलस्यैवाप्रामाणिकत्वेन तस्यैव क्षतेरित्यर्थः । नन्वत्रासिद्धविषयत्वं नास्ति । अंकुरवन्मूलभूतकर्मोपाधिव्यक्तीनां भेदस्यापि प्रत्यक्षसिद्धत्वादिति शंकते ॥ कर्माण्युपाध-

इति चेत् । सत्यं । तद्भेदस्य स्वाभाविकात्मभेदेनैवोपपत्तेः । तदेवं योगिनोऽनुसंधानाभावे विशेषाभावप्रसंगादनुसंधानमंगीकार्यं । अभेदो वा त्याज्यः । अनुसंधाने च सत्युपाधिविश्लेषोऽकिंचित्कर इति स्वरूप-

यश्चेति ॥ तद्भेदस्येति ॥ कर्मोपाधिव्यक्तिभेदस्येत्यर्थः । सुखदुःखादिभोगश्चेत्यारभ्य विशेषो योगिनः कुत इत्यंतश्लोकत्रयेणोक्तं प्रमेयं व्युत्क्रमेणोपसंहरति ॥ तदेवमित्यादिना ॥ विशेषाभावेति ॥ अयोगिभ्योऽस्मदादिभ्य इति शेषः । अभेदो वेत्यतः पूर्वं तदनंगीकारे चेति शेषः ॥ उपाधिविश्लेषोऽकिंचित्कर इति ॥ तथाच विश्लिष्टोपाधिभेदाभावस्यानुसंधानप्रयोजकत्व-

मंगीकृत्य तदभावेन अनुसंधानाभावकथनमयुक्तं । उक्तरीत्या अनुसंधानांगीकारे उपाधिविश्लेषस्याकिंचित्करत्वादित्यर्थः । स्वभावत एवेत्यस्यार्थो नमिथ्येति । मिथ्याभूतस्सत्यभूतश्चोपाधिस्तान्निमित्तो नेत्यर्थः । भेदस्येत्यत्र

क्यांगीकारे सुखदुःखादिभोगो भेदेन न दृश्यत इत्युक्तं युक्तं । एवमसत्योपाधिनिमित्ताध्यस्तभेदमंगीकुर्वतां सत्योपाधिकृतसत्यभेदमभ्युपगच्छतां चाद्वैतवादिनां पक्षं पृथङ्निराकृत्य साधारणदोषेणापि दूषयति ॥

मूलं—आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः । प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमंजसा । जीवात्मपरमात्मनोः जीवानां च यो भेदः स स्वभावत एव । न मिथ्या सत्योपाधिनिमित्तः । इति पक्षस्य विदोषत्वेनेत्युपलक्षणं । प्रामाणिकत्वेनेत्यपि ज्ञातव्यं । अयम-

भेदशब्दस्तत्पक्षोपलक्षक इत्याह ॥ इति पक्षस्येति ॥ उपलक्षणमिति ॥ ननु चशब्दद्वयसद्भावात्तयोरेव प्रामाणिकत्वप्रमाणभावसमुच्चायकत्वोपपत्तेः । उपलक्षणमिति कस्मादुक्तमिति चेत् । उच्यते । पूर्वोत्तरार्धस्थितयोश्चशब्दयोः

परस्परसमुच्चायकत्वेनैव चरितार्थत्वमभिप्रेत्य प्रामाणिकत्वप्रमाणाभावयोरुपलक्षणं कृतमिति ज्ञातव्यं। अंजसेत्यस्याभिप्रायमाह ॥ परपक्षेत्यादिना ॥ प्रतिष्ठा प्रकर्षेणस्थापनं भवतीति शेषः। तद्भावे परपक्षप्रतिक्षेपस्वपक्षसाधनयोरभावे ॥ बाधकेति ॥ परपक्षे बाधकभावसाधकभावेति विवेकः ॥ साध-

खिलः पक्ष इत्युक्तोभयविधाद्वैतासिद्धांतः। प्रत्यक्षादिविरोधाच्चेत्युपलक्षणं। प्रमाणाभावाच्चेत्यपि द्रष्टव्यं। परपक्षप्रतिक्षेपेण स्वपक्षसाधनेन च सिद्धांतस्य प्रतिष्ठा तद्भावे दुष्टता। परपक्षप्रतिक्षेपो द्विविधः। बाधकसाधकभावाभावव्युत्पादनभेदात्। स्वपक्षसाधनमपि साधकबाधकभावाभावव्युत्पादनभेदन द्विविधं। तत्रैकस्याप्यभावो दुष्टत्वहेतुः

केति ॥ साधकभावबाधकभावेति विवेकः ॥ एकैकस्येति ॥ परपक्षप्रतिक्षेपस्याभावः स्वपक्षसाधनस्याभावो वा सिद्धांतस्य दुष्टत्वे हेतुः। सिद्धांतस्य प्रतिष्ठापको न भवतीति यावत्। तथा बाधकसद्भावव्युत्पादनाभावः साधकभावव्युत्पादनाभावः अपरपक्षस्य दुष्टत्वे हेतुः। परपक्षप्रतिक्षेपको न भवतीति

यावदित्यर्थः ॥ किम्विति ॥ सिद्धांतप्रतिष्ठापकद्वयस्य परपक्षप्रतिक्षेपकद्वयस्येति सर्वस्य चतुष्टयस्याभावो दुष्टत्वे हेतुरिति किमु वक्तव्यमित्यर्थः ॥ तदिदमुक्तमिति ॥ सिद्धांतप्रतिष्ठापकद्वयं परपक्षप्रतिक्षेपकद्वयं चेति चतुष्टयमपि परपक्षे नास्तीति प्रमेयमंजसेत्यनेनोक्तमित्यर्थः । उत्तरवाक्यं संगमयितुमाह ॥ तत्रेत्यादिना । मायिनः स्वसिद्धान्तप्रतिष्ठापकं नास्तीत्याह ॥ आत्मनः स्वभावभेदबाधकस्येति । भेदो मिथ्या भेदत्वाच्चंद्रभेदवदित्यनुमानस्य

किमु सर्वस्येति । तदिदमुक्तमंजसेति । तत्रात्मस्वभावभेदबाधकस्य तदभेदसाधकस्य चाभावोन्यत्र व्युत्पादितः । भेदसाधकाभेदबाधक-

"ज्ञातेद्वैतं न विद्यते। अविद्यमानो ह्यवभाति हि द्वय" इति श्रुतिस्मृतिरूपस्य च बाधकस्येत्यर्थः ॥ तदभेदसाधकस्येति । जीवाः परमात्मनस्तत्वतो न भिद्यंते आत्मत्वात्परमात्मवदित्यनुमानस्य तद्योहं योसौ सोहं । स आत्मा-तत्त्वमसि । अहं हरिस्सर्वमिदं जनार्दन इत्यादिरूपस्यात्माभेदसाधकस्येत्यर्थः ॥ अभाव इति । अनुमानानामाभासत्ववर्णनेन श्रुत्यादीनामन्यार्थत्ववर्णनेन

च तदभावोऽन्यत्र विष्णुतत्वनिर्णयादौ व्युत्पादित इत्यर्थः । अस्मत्सिद्धांतप्रतिष्ठापकं प्रमाणमस्तीति वक्तुमुत्तरवाक्यमित्याह ॥ भेदसाधकेति ॥ प्रत्यक्षादि (प्रमाण) सिद्ध इति । विदोषत्वेन चेत्यत्र चशब्देन प्रत्यक्षादिप्रमाणसिद्धत्वस्य समुच्चितत्वादिति भावः ॥ स्वात्मैव प्रत्यक्ष इति ।

व्युत्पादनायोत्तरं वाक्यं । तत्रेदमाह । यदुक्तं प्रत्यक्षादिसिद्धो जीवेश्वरयोर्जीवानां च भेदस्तत एव तदभेदः प्रत्यक्षादिविरुद्ध इति तदयुक्तं। सर्वस्य हि स्वात्मैव प्रत्यक्षो न तुजीवांतरमीश्वरो वा । नच प्रत्यक्षाप्रत्यक्षधर्मः प्रत्यक्षो वायुवनस्पतिसंयोगवत् । तत्कथं भेदः प्रत्यक्ष इत्याशंकां परिहरञ्जीवभेदस्य प्रत्यक्षतां तावत्समर्थयते ॥ मूलं—



अहमित्यनुभवादिति शेषः ॥ नच प्रत्यक्षेति । तथाच स्वस्मिन् जीवांतरेश्वरप्रतियोगिको भेदः अप्रत्यक्षो भवितुमर्हति । प्रत्यक्षाप्रत्यक्षधर्मत्वात् वायुवनस्पतिसंयोगवदित्यनुमानमनेनोक्तं भवतीति ज्ञातव्यं ॥ तत्कथं (भेदः) प्रत्यक्ष इति । जीवेश्वरभेदः परस्परं जीवभेदश्च कथं प्रत्यक्षसिद्ध इत्यर्थः ।

जीवभेदस्य परस्परं जीवभेदस्य ॥ नैक एवानेकधर्म्म इति । तार्किकादिमते संयोगादिवदेकस्यैवानेकधर्मिनिष्ठत्वे वा उभयोरपि धर्मिणोः प्रत्यक्षापेक्षिता स्यात् । नचैवमिति भावः ॥ तस्य चेति । एकधर्मिकस्य परनिरूप्यस्य भेदस्येत्यर्थः ॥ धर्मिणः प्रत्यक्षतामिति । भेदो नामान्योन्याभावः ।

> चेष्टालिंगेन सात्मत्वे परदेहस्य साधिते । अन्यत्वं स्वात्मन-
> स्तस्मात्सर्वैरेवानुभूयते । भेदोऽहि नैक एव अनेकधर्म इत्युपपादि-
> तमन्यत्र । किंत्वेकस्मिन्धर्मिणि परप्रातियोगिक एव । तस्य च प्रत्यक्ष-
> ताधर्मिणः प्रत्यक्षतां प्रातियोगिनश्च स्मरणमपेक्षते । तत्र धर्मी स्वात्मा
> तावत्प्रत्यक्षसिद्धः । प्रातियोगिस्मृतिहेतुश्चानुभवोऽनुमानाद्भवति ।

अन्योन्याभावप्रत्यक्षे च धर्मिप्रत्यक्षमेव तंत्रं । नतु प्रतियोगिप्रत्यक्षत्वं । अन्यथा स्तंभः पिशाचादिर्न भवतीति स्तंभे पिशाचान्योन्याभावः प्रत्यक्षो न स्यादिति भावः । अत एवोक्तं मणिकृता । स्तंभे पिशाचान्योन्याभावः प्रत्यक्ष एव । अधिकरणस्य प्रत्यक्षत्वादिति ॥ प्रतियोगीति । प्रतियोगी

परमात्मेत्यर्थः । परशरीरं सात्मकं चेष्टावत्त्वादित्यनुमाने आश्रयासिद्धिपरिहारायाह ॥ **परशरीरमिति** । ननु रथादौ परिस्पंदापरपर्यायचेष्टावत्त्वसद्भावेऽपि सात्मकत्वाभावाद्व्यभिचार इत्याशंकायां हेतोरेवाभावान्न व्यभिचार इत्यभिप्रेत्य चेष्टाशब्दस्य विवक्षितमर्थमाह ॥ **चेष्टानामेति** । व्यापारः प्रयत्नः प्रयत्नविशेषइति वक्ष्यमाणत्वात् । ननु "प्रयत्नश्चात्मधर्मः स्यादुत्साहो भावना च स" इत्यभिधानात् । परशरीरे प्रयत्नरूपव्यापारवत्त्वमसिद्धमिति

तथाहि । परशरीरं तावत्प्रत्यक्षसिद्धं । तस्य चेष्टादिलिंगेन स्वशरीरवत्सात्मत्वमनुमातुं शक्यते । चेष्टा नाम हिताहितप्राप्तिपरिहारेच्छापूर्व-

चेत् । उच्यते । अत्र प्रयत्नवत्त्वं नाम तदायतनत्वं विवक्षितं । तदवच्छेदकत्वमिति यावत् । अशरीरस्य प्रयत्नायोगात् । यदाश्रित्य यदवच्छेदेनेति यावत् । अयं प्रयत्नवान्भवतीति तदर्थः । तथाच एतादृशप्रयत्नवत्त्वस्य परशरीरे सत्त्वान्नासिद्धिरिति भावः । येनेत्यनतंरं रथादाविति शेषः । ननु परचित्तवृत्तीच्छादेरप्रत्यक्षत्वेन पक्षीभूतपरशरीरावच्छेदेनात्मना क्रियमाणे

व्यापारे हिताहितप्राप्तिपरिहारेच्छापूर्वकत्वनिश्चायकाभावेन तत्पूर्वकव्यापारवत्त्वहेतोः संदिग्धासिद्धिरित्याशंक्य निषेधति ॥ **नचैवमिति** । पक्षे निरुक्तं चेष्टावत्त्वरूपं हेतुं साधयति ॥ **हिताहितेति** । परशरीरावच्छेदेन क्रियमाणस्यात्मव्यापारस्य हिताहितप्राप्तिपरिहारानुगुणतायास्तदिच्छापूर्वकताया इति यावदित्यर्थः । चेष्टावत्त्वादितिहेतुनेति शेषः । चेष्टाविशेषानुमितेति वक्ष्यमाण-

को व्यापारः । न परिस्पंदमात्रं । येन व्यभिचारः स्यात् । नचैवं संदिग्धासिद्धता । हिताहितप्राप्तिपरिहारानुगुणतायाः स्वात्मदृष्टांतेनावगमात् । अतस्तस्मात्परशरीराधिष्ठातुः स्वात्मनोऽन्यत्वं प्रत्यक्षं भवि-

त्वात् ॥ **स्वात्मेति** । स्वात्मावच्छेदकीभूतशरीरदृष्टांतेनेत्यर्थः ॥ **अवगमादिति** । तथा च परशरीरं हिताहितप्राप्तिपरिहारेच्छापूर्वव्यापारवद्भवितुमर्हति । तदवच्छेदकं भवितुमर्हतीति यावत् । परिस्पंदापरपर्यायचेष्टाविशेषवत्त्वान्मच्छरीरवदित्यनुमानेन हेतोः साधनान्न संदिग्धासिद्धिरिति भावः । तत्रोन्मत्तादिचेष्टायां व्यभिचारवारणाय विशेषपदमिति द्रष्टव्यं । **ननु तद्वे-**

तोरेवास्तु तद्धेतुत्वं मध्ये किं तेनेति न्यायेन व्याप्यव्याप्यस्य सुतरां व्याप्यत्वेन चेष्टावत्त्वलिंगेनैव सात्मकत्वं परशरीरस्यानुमीयतां । किं मध्येनिरुक्तचेष्टावत्त्वानुमानेनेति चेत्सत्यं । सावयवत्वसाधितेन कार्यत्वेन क्षित्यादेः सकर्तृकत्वस्य तार्किकैः साधितत्वेन तद्वदत्राप्युपपत्तेः । अन्यथा तत्रापि वैयर्थ्यमाशंक्येतेति न दोषः । तस्मादित्यस्यार्थः परशरीराधिष्ठातुरिति । सकाशादितिशेषः । सर्वैरेवानुभूयत इत्येतद्व्याख्यातुं तन्निवर्त्यामाशंकामाह ॥

तुमर्हति । न (चैवंसं) चेदं संभावनामात्रं । सर्वैरपि त्वनुभूयत एव ।

न चेदमिति । स्वात्मनस्तस्मादन्यत्वं प्रत्यक्षतो ज्ञायत इत्येतदित्यर्थः ॥ संभावनामात्रमिति । उत्कटकोटिकः संशयः संभावना । यद्धर्मसहचरितानेकधर्मोपलंभो यस्मिन्धर्मिणि तत्कोटावुत्कटत्वं यथा पुरुषत्वरूपधर्मसहचरितकरचरणाद्यनेकधर्मोपलंभः पुरोवृत्त्यूर्ध्वपदार्थरूपे धर्मिणि भवति । तत्कोटौ पुरुषत्वकोटावुत्कटत्वं प्रतीयते । प्रायेणानेन पुरुषेणभवितव्यमिति । तथाच संभावनामात्रमेवेदं न निश्चयः । निश्चायकप्रमाणाभावादित्यर्थः । ॥३९॥

एवकारो भिन्नक्रम इत्यभिप्रेत्यव्याख्याति ॥ अनुभूयत एवेति । तथा-
चानुभव एव निश्चायकप्रमाणमस्तीत्युक्तं भवतीति द्रष्टव्यं। कथमनुभूयत इत्य-
तस्तदुपपादयति ॥ न हीत्यादिना ॥ चेष्टाविशेषेति । परिस्पंदरूपचे-
ष्टाविशेषानुमितेत्यर्थः । तथाच चेष्टावत्त्वरूपहेतोः संदिग्धासिद्धिर्नास्तीति
भावः । प्रयत्नविशेषवत इति । हिताहितप्राप्तिपरिहारेच्छापूर्वकव्यापार-
रूपप्रयत्नविशेषावच्छेदकभूतशरीरवत इत्यर्थः । तथाच परिस्पंदापरपर्यायचे-

न हि चेष्टाविशेषानुमितप्रयत्नविशेषवतः परात्मनः स्मृतौ सत्यां तथा-
विधप्रयत्नविरहिणं स्वात्मानं प्रत्यक्षत एवानुभवंस्तस्मात्स्वात्मनोऽन्यत्वं

ष्टाविशेषेण परशरीरे अनुमितं यन्निरुक्तचेष्टावत्त्वापरपर्यायप्रयत्नविशेषावच्छेद-
कत्वं तदुपेतशरीरवत इत्यर्थः ॥ स्मृतौ सत्यामिति । अनुमानेन पूर्वम-
नुभूतत्वादिति भावः ॥ तथाविधप्रयत्नेति । हिताहितप्राप्तिपरिहारेच्छापू-
र्वकव्यापाररूपप्रयत्नावच्छेदकीभूतशरीराविरहिणमित्यर्थः । तस्मात्परमात्मनः
सकाशान्नानुभवतीति न हि वा युज्यत इत्यन्वयः । अनुभवत्येवेत्यन्वयः ।

प्रत्यक्षे धर्मिणि भेदकधर्मसाक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वादिति भावः। तथाच स्वात्मनि जीवांतरे स्वप्रतियोगिकभेदस्य प्रत्यक्षाप्रत्यक्षधर्मत्वहेतुना यदप्रत्यक्षत्वं साधितं तदनुभवबाधितत्वादप्रमाणमित्युक्तं भवतीतिज्ञातव्यं स्वाभाविकत्वं नाम किं सत्यत्वं उत सोपाधिकृतत्वं वेति विकल्पंहृदि निधा-याद्यमनूद्य दूषयति ॥ स्वाभाविकत्वं हीति ॥ प्रमाणेति। अनुभूयत

नानुभवतीति युज्यते। स्यादेतत्तथापि तस्य भेदस्य स्वाभाविकत्वं कुत इति चेत्। मैवं। स्वाभाविकत्वं हि यदा सत्यत्वं स्यात्तदा प्रमाण-सिद्धत्वादेव तत्सिध्यति। प्रामाण्यं च प्रत्यक्षस्यान्यत्रोपपादितं।

इत्युक्तप्रत्यक्षरूपप्रमाणसिद्धत्वादेवेत्यर्थः। तत् सत्यत्वं। प्रत्यक्षेणतावद्भेदो गृह्यते। तस्य च बाधकाभावात्सत्यत्वमेव सिध्यतीति भावः। ननु प्रत्य-क्षस्यातत्त्वावेदकत्वेनाप्रामाण्यात्तद्गृहीतभेदोऽसत्य एवेति चेत्तत्राह ॥ प्रामा-ण्यं चेति ॥ अन्यत्रेति। प्रत्यक्षवच्च प्रामाण्यमित्यादिनाऽनुव्याख्याना-द्वावित्यर्थः। द्वितीयं दूषयति ॥ सत्योपाधिकृतत्वं त्विति ॥ पूर्वमेवेति।

भेदश्चोपाधितः कुत इत्यादिना पूर्वमेवेत्यर्थः ॥ न पुनः प्रयतितव्यमिति । तन्निराकरणाय पुनः प्रयत्नो न कर्तव्य इत्यर्थः ॥ अनेनेति । परस्परं जीवभेदस्य प्रत्यक्षत्वोपपादनपरेण चेष्टालिंगेनेति मूलवाक्येनेत्यर्थः । जीवभेदस्य परस्परं जीवभेदस्य ॥ विरुद्धधर्मसंसर्गेणानुमानेनेति । प्रयत्नविशेषवतः परात्मनः स्मृतौ सत्यां तथाविधप्रयत्नविरहिणं स्वात्मानमनुभवन्निति विरुद्ध-

सत्योपाधिकृतत्वं तु पूर्वमेव निरस्तमिति न पुनः प्रयतितव्यं । अनेन जीवभेदस्य विरुद्धधर्मसंसर्गेणानुमानेनापि सिद्धिरुक्ता भवति ॥ एवं जीवानां परस्परभेदस्य प्रत्यक्षत्वेऽसंभवं परिहृत्य प्रत्यक्षता चोपपादि-

धर्मसंसर्गस्योपपादितत्वात्तद्रूपानुमानेनेत्यर्थः । तथाच देवदत्तात्मा यज्ञदत्तादीतरात्मभ्यो भिन्नः निरुक्तचेष्टारूपप्रयत्नविशेषवत्त्वतदभावरूपविरुद्धधर्माधिकरणत्वात् । यत् यद्विरुद्धधर्माधिकरणं तत्ततो भिन्नं। यथा शीतस्पर्शाधिकरणं जलमुष्णस्पर्शाधिकरणादनलादित्यनुमानप्रकारो द्रष्टव्यः ॥ अनुमानेनापीति । न केवलं प्रत्यक्षेणेत्यपिशब्दार्थः ॥ असंभवमिति । असं-

भावनाशंकानुभवरूपनिश्चायकप्रमाणोक्त्या परिहृतेत्यर्थः ॥ पूरणीग्रंमिति अनुभूतिगा इत्यतः पूर्वमिति शेषः । तस्मादित्यस्यार्थ ईशादिति । सार्वज्ञ्यादिविशिष्टादित्यर्थः । स्वात्मनः तद्विरुद्धाल्पत्वादिविशिष्टस्य ॥ पूर्वोक्तेति ।

ता । इदानीं जीवेश्वरभेदस्य प्रत्यक्षतामुपपादयति ॥ मूलं—अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ॥ सर्वज्ञत्वादीशगुणविरुद्धा ह्यनुभूतिगाः । जीवनिष्ठतयेति पूरणीयं । हि शब्दो यस्मादित्यर्थे । तस्मादीशादपि स्वात्मनोऽन्यत्वं सर्वैरनुभूयत एवेति पूर्वोक्तानुवृत्त्यान्वयः । नहीशधर्मविरुद्धधर्मवंतमात्मानं प्रत्यक्षतः पश्यन् ततोऽन्यत्वं न पश्यतीति युज्यते । अतिस्फुटतां भेदप्रत्यक्षस्योपपादयितुं विरुद्धधर्मबाहुल्योपपादनं । अनेन जीवेश्वरभेदस्यानुमानासिद्धता

अन्यत्वं स्वात्मनस्तस्मादित्यस्यानुवृत्त्येत्यर्थः ॥ न पश्यतीति युज्यत इति । पश्यत्येवेत्यर्थः । प्रत्यक्षे धर्मिणि भेदकधर्मसाक्षात्कारस्य भेदसाक्षात्कारव्यापकत्वादिति पूर्वोक्त एवाभिप्रायः ॥ अनेनेति । जीवेश्वरभेदस्य

प्रत्यक्षसिद्धत्वोपपादनपरेणाज्ञताचेति मूलवाक्येनेत्यर्थः ॥ अनुमानसि-
द्धता चेति । तथाच जीव ईश्वराद्भिन्नो भवितुमर्हति ईश्वरीयधर्मविरुद्धध-
र्माधिकरणत्वात् । यद्यद्विरुद्धधर्माधिकरणं तत्तत्तो भिन्नं । यथा जलानल-
मित्यनुमानं द्रष्टव्यं । तदेव ईश्वरस्य सार्वज्ञ्यादिगुणत्त्वमेव ॥ कुत इति ।
कस्मात्प्रमाणात्सिद्धमित्यर्थः । मूले सार्वज्ञ्यादीत्यादिपदेन पूर्णशक्तित्वनिर्दुःख-

चोपपादिता भवति । स्यादेतत् । यदि सार्वज्ञ्यादिगुणवत्तयेश्वरः सिद्धः स्यात्तदेव कुत इत्यत आह ॥ **मूलं—सार्वज्ञ्यादिगुणा विष्णोः श्रुतिषु प्रतिपादिताः ।** यः सर्वज्ञः सर्ववित् । परास्यशक्तिर्विविधैव श्रूयते । य आत्माऽपहतपाप्मा । सहि सर्वस्य कर्तेत्याद्यास्विति शेषः ।

त्वसर्वकर्तृत्वादीनां ग्रहणं । तत्र पूर्णशक्तित्वे परास्य शक्तिर्विविधैवेति मानं ।
य आत्मेति निर्दुःखत्वे मानं । दुःखादीनां पापकार्यत्वेन तदभावे तदभावसि-
द्धिरित्याशयः । सर्वकर्तृत्वे सवा सर्वस्य कर्तेत्यादिश्रुतिर्मानमिति द्रष्टव्यं ।
पृथक्त्वान्यत्वस्वरूपभेदानां त्रयाणां भेदवादी तार्किकः शंकते ॥ नन्विति ।

तद्दर्शनमेव वस्तुस्वरूपदर्शनमेव ॥ **प्रतियोगीति** ॥ प्रतियोगिभूतपरमेश्वरेत्यर्थः । नहि स्वरूपप्रतीतौ प्रतियोगिप्रतीतेरुपयोगोऽस्तीति भावः । तदुपपादनाय विरुद्धधर्मोपन्यासेन च किमिति च शब्दो भिन्नक्रमः । भेदोपपादनाय चेष्टालिंगसार्वज्ञ्यादिरूपविरुद्धधर्मोपन्यासश्च व्यर्थः । स्वरूपदर्शनविरुद्धधर्मादेरुपयोगाभावादिति भावः । निर्विशेषात्यंताभिन्नो नेत्यर्थः । कुतो नेत्यत आह ॥

ननु भेदो नाम वस्तुस्वरूपमेव अतस्तद्दर्शनमेव भेददर्शनमिति किंप्रतियोगिप्रतीत्यनुसरणेन किंच तदुपपादनाय विरुद्धधर्मोपन्यासेन । मैवं । न निर्विशेषवस्तुमात्रं भेदः । तथा सति वस्तुमात्रस्य परेणाप्यंगीकृतत्वाद्विवादानुपपत्तेः । किंनामान्योन्याभाव एव । सच रूपादिवद्वस्तुना

॥४२॥ **तथा सतीति** ॥ निर्विशेषवस्तुमात्रत्वे इत्यर्थः ॥ **विवादेति** ॥ भेदविषये विप्रतिपत्त्यनुपपत्तेरित्यर्थः । ननु भेदस्य वस्तुस्वरूपत्वाभावे भेदो नाम कः पदार्थः । सच वस्तुस्वरूपमिति च कोऽर्थ इत्याशंकते ॥ **किंनामेति** ॥ उत्तरमाह ॥ **अन्योन्याभाव एवेत्यादिना** ॥ अन्योन्याभाव एव भेदो नाति-

रिक्तः स्वरूपभेदो नाम कश्चिदस्तीत्यर्थः । यथोक्तमनुव्याख्याने । पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः । व्यवह्रियंते सततं लोकवेदानुसारत इत्यादि ॥ रूपादिवदिति ॥ यावद्वस्तुभाविरूपपरिमाणादिवदित्यर्थः । सविशेषाभिन्नः सविशेषात्यंताभिन्नः । एवं सति प्रतियोगिप्रतीत्यनुसरणं युक्तमित्याह ॥ अन्योन्याभावश्चेति ॥ प्रतियोगिनिरूप्य इति ॥ सम्ब्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति वचनादिति भावः । तथाच

सविशेषाभिन्न इत्येव स्वरूपं भेद इत्यस्यार्थः । अन्योन्याभावश्च प्रतियोगिनिरूप्य इत्युपपन्नमेव तत्प्रतीत्यनुसरणं । साद्दश्यादिना सन्न-

वस्तुप्रतीतेः प्रतियोगिप्रतीतिसापेक्षत्वाभावेऽपि भेदप्रतीतेस्तत्संभवत्येव । वस्तुना सविशेषाभेदांगीकारात् । विशेषस्य च भेदकार्यकारित्वादिति भावः । भेदोपपादनाय विरुद्धधर्मोपन्यासोपि युक्त इत्याह ॥ साद्दश्यादिनेति ॥ साद्दश्य दूरस्थत्वादिरूपदोषेणेत्यर्थः । नोपलभ्यते । गोगवययोः द्रवीभूतघृततैलयोः दूरस्थयोश्चूतपनसयोश्चेत्यर्थः । अतो वस्तुप्रतीतेर्विरुद्धधर्मसापेक्षत्वाभावेपि

भेदप्रतीतेस्तद्युक्तं। वस्तुना सविशेषाभेदांगीकारात्। विशेषस्य भेदकार्यकारित्वादिति भावः। भेदो नामान्योन्याभाव एव न तदतिरिक्तः स्वरूपभेदो नाम कश्चिदस्तीत्यत्रोपष्टंभकमाह ॥ अत एवेति ॥ यतो भेदो नामान्योन्याभाव एव न ततोऽतिरिक्तः। अत एवात्मस्वभावभेदस्येति भेदशब्दस्य प्रस्तुतत्वात् भिन्नत्वं स्वात्मनस्तस्मादिति वक्तव्यं। तथाऽनुक्त्वा अन्यत्वमिति यदोक्तं।

प्यन्योन्याभावो नोपलभ्यत इति विरुद्धधर्मोपन्यासोऽप्युपपद्यते। अत एव भेद इति प्रस्तुतेऽप्यन्यत्वमित्युक्तं। भवेदेवं यदि सार्वज्ञ्यादिकमीश्वरस्य सत्यं स्यात्। न चैतदस्ति। तत्र प्रमाणाभावात्। यः सर्वज्ञ- इत्यादिश्रुतयस्तु सार्वज्ञ्यादिकमेव प्रतिपादयंति। न पुनस्तस्य सत्यतां

तदा ज्ञायते भेदो नामान्योन्याभाव एवेत्यर्थ इति। ननु यः सर्वज्ञ इत्यादिश्रुतय एव सार्वज्ञ्यादीनां सत्यत्वे प्रमाणमिति। तत्राह ॥ यः सर्वज्ञ इत्यादिश्रुतयस्त्विति ॥ तस्य सार्वज्ञ्यादिगुणजातस्य तथाऽश्रवणादिति। सार्वज्ञ्यादिगुणजातं सत्यमित्येवं यः सर्वज्ञ इत्यादिश्रुतिष्वश्रवणादित्यर्थः। नन्वस्तु

सार्वज्ञ्यादिगुणानां न सत्यत्वं । तथापि मृषाभूतविरुद्धधर्माधिकरणत्वेनापि जीवेश्वरयोर्भेदः साध्यत इति चेत्तत्राह ॥ मृषेति ॥ मिथ्याभूतेत्यर्थः । स्यादेवं मिथ्याभूतविरुद्धधर्माधिकरणत्वेनापि जीवेश्वरयोर्भेदसाधनं । यदि साध्यमानस्तद्भेदोप्यतात्विकः स्यात् । न चैवं । भवद्भिस्तद्भेदस्य तात्विकत्वां

तथाऽश्रवणात्। मृषा विरुद्धधर्माधिकरणतया (च) तात्विकभेदप्रतीत्यु-
पपादनमयुक्तं । अतिप्रसंगादित्यत आह ॥ **मूलं—सत्यः सो अस्य**
**महिमेत्यादिवाक्यान्मृषा न च** । सार्वज्ञ्यादिगुणा विष्णोरिति व-
र्तते । यद्यपि यः सर्वज्ञ इत्यादिश्रुतयः सार्वज्ञ्यादिकमेव प्रतिपादयंति ।
तथापि स वेदोदितोऽस्य महिमा सर्वज्ञत्वादिः सत्य एवेति वाक्यांतरा-

गीरात् । अतोऽतात्विकविरुद्धधर्माधिकरणत्वेन तात्विकभेदसाधनमयुक्तमि-त्यर्थः । कुतोऽयुक्तमित्यत आह ॥ अतिप्रसंगादिति ॥ शुक्तिकायां शुक्तिकात्वविरुद्धस्य रजतत्वस्यारोपितस्य सद्भावेन शुक्तिकाया अपि शुक्तिकातो भेदप्रसंगात् । प्रतिपादयतीत्यनंतरं तत्सत्यत्वमिति शेषः । वाक्यादित्यनंतर-

||४४|| मध्याहार्यमाह ॥ **सत्यतावगमादिति** ॥ **अंगीकृत्यचेदमुदितमिति** ॥ भवेदियमित्यादिना यस्सर्वज्ञ इत्यादिश्रुतयः सार्वज्ञ्यमेव प्रतिपादयंति । न पुनस्तत्सत्यत्वमिति शंकितमंगीकृत्य सत्यः सो अस्य महिमेति वाक्यांतरात्सत्यत्वं सिध्यतीत्युत्तरमुदितमित्यर्थः ॥ **वस्तुविषयकमेव ज्ञानमिति** ॥ यथा विज्ञानमानंदं ब्रह्मेत्यादौ सत्यपदाभावेऽपि स्वतःप्रमाणया श्रुत्यैव विज्ञा-

त्सत्यतावगमान्न सार्वज्ञ्यादिकं मृषेति । अंगीकृत्य चेदमुदितं । वस्तुतस्तु वस्तुविषयकमेव ज्ञानं तत्सत्यत्वे प्रमाणं । न पुनस्तत्र प्रमाणांतरापेक्षा । प्रामाण्यस्वतस्त्वस्य सिद्धत्वात् । अतो यः सर्वज्ञ इत्यादि-

नानंदात्मकत्वं पारमार्थिकसत्यमिति सिध्यति । तथा प्रकृतेऽपि यः सर्वज्ञ इत्यादिश्रुतौ सत्यपदाभावेऽपि सार्वज्ञ्यादिकं पारमार्थिकसत्यमेवसिध्यतीत्यर्थः ||४४||
कुत इत्यत आह ॥ **प्रामाण्यस्वतस्त्वस्येति** ॥ उत्पत्तौ ज्ञप्तौ चेति शेषः । ज्ञानजनकमात्रजन्यत्वमुत्पत्तौ प्रामाण्यस्य स्वतस्त्वं । ज्ञानग्राहकमात्रग्राह्यत्वं ज्ञप्तौ प्रामाण्यस्य स्वतस्त्वं तथा ज्ञानं येन जायते तेन प्रामाण्यं सहैव जायते ।

तथा तज्जन्यं ज्ञानमपि येन ज्ञायते तेनैव तत्प्रामाण्यमपि ज्ञायते । तथा च यथावस्थितार्थज्ञेयविषयकारित्वरूपप्रामाण्यस्यार्थसत्तादिघटितत्वेन वस्तुविषयकमेव ज्ञानं तत्सत्यत्वे प्रमाणमित्यर्थः । ततः किं प्रकृत इत्यत आह ॥ तत्सत्यतामिति ॥ यः सर्वज्ञ इत्यादिश्रुतेः प्रमाणभूतज्ञानजनकत्वात्प्राप्त्माण्यस्य चार्थसत्ताघटितत्वाद्यः सर्वज्ञ इत्यादिश्रुतिरेव सार्वज्ञ्यादिगुणसत्यतां प्रतिपादयतीत्यर्थः ॥ आक्षेप इति ॥ भवेदेवं यदीत्यादिना कृत इत्यर्थः । ननु यदि

श्रुतिरेव तत्सत्यतां प्रतिपादयतीत्यनुपपन्न एवाक्षेपः । एवं सति शु-

प्रामाण्यस्य स्वतस्त्वात् वस्तुविषयकं ज्ञानमेव तत्सत्यत्वे प्रमाणं स्यात् तर्हीदं रजतमिति ज्ञानप्रामाण्यस्यापि ज्ञानजनकजन्यत्वेन स्वतस्त्वापत्त्या तस्य चार्थसत्ताघटितत्वेन शुक्तिरजतस्यापि सत्यता स्यादिति शंकते ॥ एवं सतीति ॥ औत्सर्गिकेति ॥ सव्यभिचारनियमो ह्युत्सर्गः । जायमानं ज्ञानं प्रमाणं सदेव जायत इत्युत्सर्गः । तथा प्रामाण्यमपि ज्ञानग्राहकेणैव गृह्यत इत्यप्युत्सर्गः । अपवादादप्रामाण्यमपि जायते ज्ञायते च । प्रामाण्योत्पत्त्यपवादकः

करणदोषः । ज्ञप्त्यपवादको बाधकप्रत्ययः । तथा चेंद्रियदोषेण काचादिना शुक्तिरजतादिज्ञाने प्रामाण्यमेव जायते । बाधकप्रत्ययेन चाप्रामाण्यमेव ज्ञायते । तथा चाप्रामाण्यस्यार्थासत्त्वघटितत्वान्न तद्विषयकं ज्ञानं तत्सत्यत्वे प्रमाणमिति न तेन तस्य सत्यतासिद्धिरित्यर्थः । नचैवं प्रामाण्यस्वतस्त्वहानिः । अप्रामाण्यजनकसामग्र्यसमवहितज्ञानजनकसामग्रीजन्यत्वस्योत्पत्तौ स्वतस्त्वेन तथा प्रा-

क्तिरजतादिसत्यतापि स्यादिति चेन्न । औत्सर्गिकप्रामाण्यस्य करणदोषैर्बाधकप्रमाणैरपनयनेन तन्मिथ्यात्वस्य स्थितत्वात् । नचैवमेवास्तु प्रकृतेऽपीति वाच्यं । करणदोषबाधकप्रमाणाभावादित्याह ॥ मूलं—

माण्यग्राहकसामग्र्यसमवहितज्ञानग्राहकग्राह्यत्वस्य ज्ञप्तौ स्वतस्त्वेन च विवक्षितत्वादिति ज्ञातव्यम् ॥ एवमेवास्त्विति ॥ शुक्तिरजतादिज्ञानवदेव यःसर्वज्ञ इत्यादिश्रुत्या जायमानमपि ज्ञानं अप्रमाणमेव जायतां । तथैवज्ञायतांच ।

चाभावादित्याहेत्यर्थः ॥ करणदोषेति ॥ नित्या वेदाः समस्ताश्चेत्यादिप्रमाणेन वेदापौरुषेयतायाः प्रमितत्वेन करणदोषनिबंधनदोषाभावोपपादनाय वेदोक्तेत्युक्तमित्यर्थः ॥ दोष इति ॥ पदवाक्ययोः शक्तितात्पर्यापरिज्ञानमेव दोष इत्यर्थः ॥ संभवतीति ॥ तथा च प्रतिपत्तृदोषेण वेदजन्यज्ञाने अप्रामाण्यमेव ज्ञातव्यमित्यर्थः ॥ तस्यापीति ॥ शक्तितात्पर्यापरिज्ञानरूपप्रतिपत्तुर्दोषोऽपि

**नच वेदोक्तमिथ्यात्वे मानं** । अत्र नच तन्मिथ्यात्वे मानमिति वक्तव्ये वेदोक्तेति करणदोषाभावोपपादनार्थमुक्तं । अपौरुषेयतया वेदे दोषाभावेऽपि प्रतिपत्तुरेव दोषः संभवतीति चेन्न । तस्यापि बाधकप्रमाणोन्नेयत्वेन· तदभावेऽभावनिश्चयात् । ननु नेहनानास्ति किं-

प्रतीतार्थे बाधकप्रमाणसद्भावेनोन्नेयः । तस्य च वेदेऽभावेन प्रतिपत्तुर्दोषाभावनिश्चयादित्यर्थः । बाधकप्रमाणाभावेऽपि शक्तितात्पर्ययोः संदेहमात्रेण श्रुतिप्रतीतार्थपरित्यागे गवानयनादिवाक्यं श्रुत्वा तात्पर्यसंदेहेन न प्रवर्तेतेति ज्ञातव्यं ॥ नेह नानेति ॥ इह ब्रह्मणि किंचन गुणकर्मादिकं नानाभूतः प्रपंचश्च

नास्तीत्यर्थः । विष्णुसंबंधिविशिष्टाकारः यस्सर्वज्ञ इत्यादिश्रुत्युक्तविशिष्टाकारः विशिष्टं स्वरूपमित्यर्थः । ननु तर्हि यस्सर्वज्ञ इत्यादिश्रुतीनां का गतिरित्यत आह ॥ व्यावहारिकेति ॥ ब्रह्मज्ञानबाध्यत्वेन मिथ्याभूतेत्यर्थः ॥ अन्यत्रेति ॥ मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतोऽभवदित्यादिनानुव्याख्यानेनेत्यर्थः । ( तथाहि । यदि सार्वज्ञ्यादेरात्मातिरिक्तस्य मिथ्यात्वं नेहनानेति

> चनेत्यादिश्रुत्या विमतो विशिष्टाकारो मिथ्या विशिष्टाकारत्वात् नीलं नभ इति विशिष्टाकारवदित्याद्यनुमानेन च सार्वज्ञ्यादेर्मिथ्यात्वप्रतीतेः कथं तत्र प्रमाणाभावः। अतो व्यावहारिकसार्वज्ञ्यादिविषयाः यः सर्वज्ञ

श्रुतिबलेन स्यात्तर्हि श्रुतिवाक्यस्यैव मिथ्यात्वं स्यात् । आत्मातिरिक्तत्वात् । अन्यथा स्वस्मिन्नेव प्रामाण्यरहितं न कंचिदर्थं प्रतिपादयेत् । यदि चैकं वाक्यं मिथ्या स्यात्तथापि सार्वज्ञ्यादिमिथ्यात्वं न प्रतिपादयेत् । मिथ्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनादिति । तथाच नेहनानेति वाक्यस्य अप्रामाण्यमिथ्यात्वाभ्यां सार्वज्ञ्यादिमिथ्यात्वप्रतिपादनासामर्थ्यात् । न तेन सार्वज्ञ्यादि-

मिथ्यात्वसिद्धिरिति भावः । तर्हि कः श्रुत्यर्थ इति चेदुच्यते । इह ब्रह्मणि नाना भिन्नं किंचन गुणकर्मादिकं नास्तीति निषेधेन सार्वज्ञ्यादिमिथ्यात्वं भवति । सविशेषणेहि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे इति न्यायात् । उभयनिषेधे गौरवात् । विशेषणस्यप्रथमप्राप्तत्वात् । अन्यथा तदुपादनवैयर्थ्यात् । न जीर्णमलवद्वासाः स्नातकः स्यादित्यादौ दर्शनाच्च । अत

इत्यादिश्रुतय इत्यत आह ॥ मूलं—तन्मानतापि न ॥ नेहनानेत्यादिश्रुतेस्तत्र सार्वज्ञ्यादिमिथ्यात्वे मानताऽपि नास्ति । तथोपपादितमन्यत्र । एवं तस्यानुमानस्यापि मानता नास्ति । धर्मिग्राहकप्रमाण-

एवोक्तं "विशेष्यं नाभिधां गच्छेत्क्षीणशक्तिर्विशेषण" इत्येवं पदवाक्यप्रमाणविदामग्रेसरेण परमास्तिकेन भगवता श्रीमदाचार्येणोक्तो गुणकर्मभगवत्स्वरूपभेदाभाव एव श्रुत्यर्थोऽत्रज्ञेय इति ।) अनुमानस्य विशिष्टाकारत्वानुमानस्य ॥ धर्मिग्राहकप्रमाणेति ॥ सार्वज्ञ्यादिविशिष्टाकारः सिद्धो न वा पक्षे आश्रयासिद्धिः । आद्ये श्रुत्यैव तत्सिद्धिर्वाच्या । तथाच सत्यत्वेनैव सिद्धत्वात्सत्य-

त्वेन श्रुतिसिद्धं विशिष्टाकारं पक्षीकृत्य मिथ्यात्वसाधने धर्मिग्राहकप्रमाणविरोध इत्यर्थः । श्रुतेः प्रतीतार्थे मानता नास्ति । अनुमानस्य सर्वथा नास्तीति विवेको द्रष्टव्यः । अपिशब्दस्य कुत्रान्वय इत्याकांक्षायां तद्दर्शयति ॥ नमान-

विरोधादिति व्याख्येयं । न मानमित्युक्तं । यदुच्यते तस्यापि मानता नास्तीत्यपि शब्दसंबंधः । तदेवमद्वैतमतेऽज्ञानासंभवोऽभिहितः । ततः किमित्यत आह ॥ मूलं—अतोऽज्ञासंभवादेव नाधिकार्यैक्यवादिनां ॥ अज्ञोहि शास्त्रेऽधिक्रियते । उक्तविधयाऽज्ञानानुपपत्त्याऽज्ञो न संभवति । ततश्चैक्यवादिनां मते शास्त्रस्याधिकारी न संभवति ॥ मूलं—अतो नाज्ञातमिति च विषयो विषयांतरे ॥ अतो ज्ञानासंभवादज्ञातं वस्तु न संभवति इति हेतोरैक्यवादिनां मते शास्त्रस्य

मित्युक्तमिति ॥ तथा च नचवेदोक्तमिथ्यात्वे मानमित्युक्तं । यदुच्यते नेह नानेति श्रुतिरुक्तानुमानं च मानमिति । तस्यापि मानता नास्तीत्यपि शब्दसंबंधो द्रष्टव्य इत्यर्थः । ऐक्यवादिनामित्येतदत्राप्यनुवर्तत इत्यभिप्रेत्योक्तं ।

ऐक्यवादिनां मत इति । इति च विषय इत्यत्र चशब्दो भिन्नक्रम इत्याह ॥ विषयश्चेति ॥ नञोऽनुवृत्तिमभिप्रेत्य न संभवतीत्युक्तं ॥ उक्तोच्यमानव क्ष्यमाणशेषतयेति ॥ अज्ञानासंभवादेव नाधिकार्यैक्यवादिनां संभवति वि- षयांतरे भेदवादेऽधिकार्युपपद्यत इति पूर्ववाक्योक्तशेषतया तथा अतो नाज्ञा- तमिति चेति ऐक्यवादे विषयो नोपपद्यते । विषयांतरेभेदवादे विषयस्तूपपद्यत

विषयश्च न संभवति । किंतु विषयांतरे देशांतरे भेदवादेऽधिकार्यादिकं संभवतीत्युक्तोच्यमानवक्ष्यमाणशेषतया व्याख्येयं । अज्ञातो हि शा- स्त्रस्य विषयो भवति । शास्त्रस्य परार्थत्वात् ॥ मूलं—अज्ञाभावा-

इति उच्यमानवाक्यशेषतया तथा अज्ञाभावात्फलं कस्येत्यैक्यवादिनां मते प्रयोजनं न संभवति विषयांतरे भेदवादे फलं संभवतीति तथा योगः शशनृ- शृंगयोरित्यैक्यवादिनांमते संबंधो न संभवति विषयांतरे भेदवादे संबंधः सं- भवतीति वक्ष्यमाणशेषतयांऽतर इत्येतत्पदं व्याख्येयमित्यर्थः। एतदुपपादयति॥ अज्ञातोहीति ॥ कुत इत्यत आह ॥ शास्त्रस्येति ॥ परार्थत्वादिति ॥

परां जिज्ञासुमनर्थत्वादित्यर्थः । तथा च शास्त्रस्य जिज्ञासुं प्रति प्रयोजनवत्त्वा ज्ज्ञातुमिच्छारूपजिज्ञासायाश्चात्रत्र संभवात्त्वन्मते चाज्ञानासंभवनाज्ञानवत्त्वभा वान्न शास्त्रविषयः संभवतीत्यर्थः । शास्त्रफलं शास्त्रप्रयोजनं । तस्य अज्ञस्य ॥ संभवतीति ॥ प्रतियोगितदभाववोरेकाधिकरणनिष्ठत्वानियमादिति भावः ॥

त्फलं कस्य ॥ अज्ञे हि सत्यज्ञानानिवृत्तिलक्षणं शास्त्रफलं तस्य संभवति । उक्तप्रकारेणाज्ञानानुपपत्त्याऽज्ञाभावात्फलं कस्य स्यात् । न कस्यापीति ॥ मूलं—योगः शशनृशृंगयोः ॥ एवमधिकारिविषयप्रयोजनानामसत्त्वात्तत्संबंधः शशनृशृंगयोः संबंध इवानुपपन्न एव । तथाचाद्वैतमते शास्त्रस्यानारंभणीयत्वं स्यादिति । नन्वज्ञानासंभव एव कथं । ब्रह्मणो जीवस्य वाऽज्ञानोपपत्तेः । न च तत्र दौर्घट्यमुक्तमज्ञानस्येति

न कस्यापीति ॥ तथाचैक्यवादे प्रयोजनं न संभवतीति भावः । तत्संबंधः तेषां परस्परं संबंधः ॥ अनुपपन्न एवेति । संबंधिनामेवासंभवादिति भावः ॥ तथाचेति ॥ विषयाद्यनुबंधचतुष्टयशून्यत्वादित्यर्थः ॥ तत्रेति ॥ ब्रह्माश्रितत्व

पक्षे जीवाश्रितत्वपक्षे चेत्यर्थः । दौर्घट्यमनुपपन्नत्वं ॥ उक्तामिति ॥ "अज्ञता ऽखिलसंवेत्तुर्घटते न कुतश्चन" इत्यादिनेत्यर्थः। आरोपितत्वोक्त्या कथं दौर्घट्य-परिहार इत्यत आह ॥ परमार्थसतो हीति ॥ भूषणमेवेति ॥ आरोपितस्य दौर्घट्यामित्यर्थः ॥ अन्यथेति ॥ आरोपितस्य दौर्घट्यं बाधकं चेदित्यर्थः । दुर्घटत्वं आश्रयाद्यनिरूपणेनानुपपन्नत्वं घटमानत्वे आश्रयादिनिरूपणेनोपपद्य-

वाच्यं । यतोऽज्ञानमारोपितमेव । परमार्थसतो हि दौर्घट्यं बाधकं नारो-पितस्य । प्रत्युत भूषणमेव । अन्यथा ऽऽरोपितत्वानुपपत्तेः। तदुक्तं "दुर्घ-टत्वमविद्याया भूषणं नतु दूषणं । कथंचिद्धटमानत्वेऽविद्यात्वं दुर्घटं

मानत्व इत्यर्थः ॥ अविद्यात्वं दुर्घटमिति ॥ आविद्यात्वमेवानुपपन्नमित्यर्थः। यथोक्तं । "अविद्याया अविद्यात्वमिदमेवस्वलक्षणं । यन्मानतासहिष्णुत्वं" इति । अविद्याया अविद्यात्वमेव स्वलक्षणं । किं तदविद्यात्वं । यन्मानताऽसहिष्णुत्वं प्रमाणप्रवृत्त्यसहिष्णुत्वं । स्वविषये प्रमाणं न सहत इत्यर्थः । इदमुपलक्षणं । आश्रयादिविचारासहिष्णुत्वं चेत्यपि द्रष्टव्यमिति तदर्थः ॥ तथा च कथमि-

रूपोपाधिसंबंधाज्जीवरूपं दुःखाज्ञानादिभिर्विशिष्टमुत्पद्यत इत्यर्थः ॥ विनाश एवेति ॥ यथा दंडाद्युपाध्यपगमे तद्विशिष्टस्यैव नाशो दृष्ट एवमेवेत्यर्थः । शंकते ॥ जीव इति ॥ दुःखादिविशिष्टरूपे नष्टे सतीत्यर्थः ॥ स्वरूपमात्रेति ॥ विशेष्यमात्रेत्यर्थः ॥ तथोच्यत इति ॥ ब्रह्मैक्यापत्तिरित्युच्यत इत्यर्थः ॥ तर्हीति ॥ यथा देवदत्तरूपे विशेष्यमात्रे दंडाद्युपाधिसंबंधेन विशिष्टाख्यपदार्थांतरोत्पादस्तदपगमे तन्नाशश्च भवति एवमेव विशेष्यभूते चिन्मात्र

एव न ब्रह्मैक्यापत्तिरित्यापत्तेः । जीवे नष्टे स्वरूपमात्रावशेष एव तथोच्यत इति चेत् । तर्हि ब्रह्मण्येव बंधमोक्षावंगीकृतौ स्यातामित्युक्तदोषा-

एवांतःकरणाद्युपाधिसंबंधेन तत्कार्याज्ञानदुःखादिरूपबंधप्राप्त्या श्रवणादिसाध्यापरोक्षज्ञानेनोपाध्यपगमेऽज्ञानादिरूपबंधध्वंसस्यापि तत्र तत्रांगीकारप्रसंगः । बंधमोक्षयोः सामानाधिकरण्यनियमादिति भावः । नन्वंगीक्रियेते ब्रह्मण एव बंधमोक्षौ कोदोष इत्यत आह ॥ उक्तदोषेति ॥ अज्ञानरूपबंधांगीकारे "अज्ञता खिलसंवेत्तुर्घटते न कुतश्चन" इत्युक्तदोषापत्तिरित्यर्थः । दुःखरूपबंधांगीकारे

दिति भावः ॥ **मोक्षे चेति** । आवरणनिवृत्तिर्हि मोक्षः । आवरणनिवृत्तौ मोक्षे आत्मनिवृत्तिरेव स्यादिति भावः ॥ **सत्यां प्रतीताविति** ॥ अहमज्ञ इत्यज्ञानस्य प्रतीतौ सत्यां तत्र दौर्घट्यं भूषणमित्युच्यत इत्यर्थः । तर्हि समानमेतन्ममापीत्यत आह ॥ **नचेति** ॥ नहीत्यर्थः । येन तत्रापि दौर्घट्यं भूषण-

निवृत्तिरित्याद्यनुपपत्तिरविद्याया भूषणमित्येव समाधानं वाच्यं स्यात्। तस्मादनुपपत्तिर्वा परिहर्तव्या अज्ञानं वा त्याज्यं । सत्यां प्रतीताविदमुच्यते । नचात्मनोऽविद्यात्वं प्रतीयत इति चेत्समं प्रकृतेऽपि। नहि सर्वज्ञस्य ब्रह्मणोऽज्ञानं प्रतीयेत । नापि परमात्मैवोपाध्यवच्छिन्नोऽहमज्ञ

मित्यंगीकार्यं स्यादिति भावः ॥ **सममिति** ॥ अज्ञानस्यापि प्रतीत्यभावादिति भावः । ननु कथमज्ञानस्य प्रतीत्यभावः । अहमज्ञ इति प्रतीतेः सर्वसिद्धत्वादिति चेत् । तत्र पृच्छामः । अज्ञानप्रतीतिः किंब्रह्मणोऽगीक्रियते उत जीवस्येति विकल्प्य आद्यं दूषयति ॥ **नहीति** ॥ द्वितीयमाशंक्य निराकरोति ॥ **नापीति** ॥ जीवस्येति शेषः । उपाध्यवच्छिन्नः परमात्मैवाहमज्ञः अज्ञानवानह-

मिति प्रतीतिर्जीवस्यापि नास्तीत्यर्थः।ननु जीवस्तावज्ज्ञानानंदादिरूपब्रह्मात्मकः। तस्य च स्वरूपं प्रति भासाभावस्तावदस्ति । अतस्तदावरकभूताविद्या आत्मातिरिक्ता जीवेस्तीत्यंगीकार्यमित्याशंक्य निषेधति ॥ यथास्वरूपमिति ॥ नन्वधिगतवेदांतस्याद्वैतवादिनो नित्यनिरयप्राप्तिरिति चेत्तत्राह ॥ **सर्वज्ञस्येति** ॥

इति प्रतीतिरस्ति । यथास्वरूपं प्रतिभासाभावश्चात्मरूपाविद्ययैव कल्प्यतां लाघवादित्युक्तमेवेति । किंच अनुपपत्तिर्भूषणमित्यंगीकुर्वताऽधिगतवेदांतस्याप्यद्वैतवादिनो नित्यनिरयप्राप्तिरंगीकर्तव्या । सर्वज्ञस्याज्ञानानुपपत्तेरिवाधिगतमहावाक्यस्य नित्यदुःखानुपपत्तेरपि भूषणत्वसंभवात्। निरयादेरप्यविद्यामयत्वादित्याह ॥ **मूलं— अंधंतमोप्यलंकारो**

सर्वज्ञस्याज्ञानं न संभवतीत्युक्ते यथा साऽनुपपत्तिरज्ञानस्य भूषणमित्युच्यते तथेत्यर्थः । महावाक्यं तत्त्वमस्यादि । नन्वज्ञानस्यारोपितत्वात्तस्य दौर्घट्यं भूषणमित्युच्यते । निरयादिकं तु न घटत इति चेत्तत्राह ॥ **निरयादेरपीति** ॥ उपादानोपादेययोरभेदेनाविद्या (निरया) वच्छिन्ननिरयादेरपि आरोपितत्वेन

तद्दौर्घट्यस्यापि भूषणत्वसंभवादित्यर्थः ॥ इतिशेष इति ॥ तथाचाधिगताद्वैतवादिनः संकरादेर्नित्यदुःखस्वरूपमंधंतमः शिरोमणिः अलंकारः शिरोरत्नभूतालंकारः स्यादिति मूलार्थो द्रष्टव्यः । इदं नित्यनिरयरूपं । आरंभणीय-

नित्यदुःखं शिरोमणिः ॥ स्यादिति वर्तते । अधिगतमहावाक्यस्येति शेषः । अनेन परब्रह्मणोऽज्ञानमंगीकुर्वाणानामिदं फलं भवतीति सूचितं भवति । वेदवेदांतयोर्जीवब्रह्मणोरेकत्वे तात्पर्यमित्यंगीकारेऽधिकार्याद्यनुपपत्त्याऽनारंभणीयत्वं स्यात् । भेदपक्षे त्वधिकार्यादिसंभवादारंभणीयत्वोपपत्तिरिति विषयांतर इत्यनेनोक्तं । तद्विवृणोति ॥ मूलं—अतःपरोमात्रयेति पूर्वश्रुतिनिदर्शितः । अन्यमीशामिति श्रुत्या भिन्नजीवदृशां गतः । भिन्नत्वेनात्मसादृश्यदो यदेति श्रुतेः सदा ॥

त्वोपपत्तिः । वेदवेदांतयोरिति वर्तते ॥ तद्विवृणोतीति ॥ विषयांतर इति सामान्यतः प्रतिज्ञातं तदनुपपत्तिपरिहाराय श्रुत्युदाहरणपूर्वकं विवृणोतीत्यर्थः ॥ आद्यार्धश्लोकेनेति । श्लोकस्याद्यार्धः आद्यार्धश्लोकः तेनेत्यर्थः । आद्यार्धेने-

त्यपि क्वचित्पाठः ॥ ईश्वरपदादेवेति ॥ लोक एवाविपालगोपालांगनं विदित इत्यर्थः ॥ कथमिति ॥ अज्ञातत्वाभावादितिभावः । अप्राप्ते शास्त्रमर्थवदिति न्यायादिति द्रष्टव्यं ॥ परोमात्रयेतीति ॥ परो मात्रया तन्वा वृधान नते महित्वमन्वश्नुवंति इति श्रुतेरयमर्थः । तन्वा शरीरेणैव न तु कीर्तिमात्रेण वावृधान वधृधान हे विष्णो त्वं मात्रया गुणानां परिमितेः सकाशात्परोऽतीतोऽसि अपरि-

अत इत्यद्वैतपक्षेऽधिकार्याद्यसंभवं परामृशति । अत्राद्यार्धश्लोकेन परमेश्वरः शास्त्रस्य विषयो दर्शितः । स चेश्वरपदादेव विदित इति कथं शास्त्रस्य विषयः स्यात् इत्यत उक्तं । परोमात्रयेति ईश्वरसत्तामा

मितगुणोऽसीत्यर्थः। एतादृशस्य ते महित्वं केऽपिनाश्नुवंतीति । मूले इति पूर्वश्रुतीत्यत्र पूर्वशब्द आदिशब्दार्थकः । तेन गुणाः श्रुतास्सुविरुद्धाश्च देवे संत्यश्रुता अपि नैवात्र शंका इत्यादिग्रहणं । कथमनेन शंकापरिहार इत्यत आह ॥ ईश्वरसत्तेति॥ईश्वरस्वरूपसद्भावमात्रस्येत्यर्थः ॥ अधिगतत्वेऽपीति ॥ ईश्वरपदादेव लौकिकैरिति शेषः । अतींद्रिये तस्मिन्नुपदेशाद्यसंभवेन व्युत्पत्त्य-

॥५१॥

योगात् ईश्वरपदादपि तदधिगतिर्न संभवतीत्याशयेन कथंचिदित्युक्तं । तस्ये-श्वरस्य ॥ अपरिमितेति ॥ अगणितेत्यर्थः । आकरः खनिः आश्रय इति यावत् ॥ श्रुतिनिदर्शितस्येति ॥ श्रुतिप्रदर्शितस्य श्रुतिप्रतिपाद्यस्येति यावत् ॥ तथेति ॥ ईश्वरपदेन लौकिकैरगण्यगुणाश्रयत्वानवगमादित्यर्थः । एवं सति अगण्यगुणाश्रयत्वेनेश्वरस्याज्ञातत्वाच्छास्त्रस्य विषयो भवतीत्याह ॥ सामान्य

त्रस्य कथंचिदधिगतत्वेपि तस्यापरिमितगुणाकरतया श्रुतिनिदर्शित-स्य तथाऽनवगमात्सामान्यतो विशेषतश्च तदवगमार्थं शास्त्रमिति द्विती-यार्धेनाधिकारी दर्शितः । स च परमात्मात्मकश्चेत्सर्वज्ञतया नाधिकारी स्यादिति श्रुत्या भिन्नत्वेन समर्थितः । यद्यप्यद्वैतपक्षेऽधिकार्याद्यसंभव-

त इति ॥ ईश्वरोऽगण्यगुणाश्रयः इति सामान्यतो ज्ञानानंदशक्त्याद्यगण्यगुणवा-निति विशेषतश्चेत्यर्थः । तदधिगमार्थं अगण्यगुणाश्रयत्वज्ञापनार्थं ॥ द्विती-यार्धेनेति ॥ भिन्नजीवद्दशं गत इति विशेषण कथनेनाधिकारी दर्शित इत्यर्थः॥ नाधिकारी स्यादिति । अज्ञ एवाधिकारीति भावः । स्यादित्यनंतरमत

उक्तमन्यमीशमिति शेषः । तदभिप्रायमाह ॥ श्रुत्या भिन्नत्वेनेति ॥ अन्यमीशमिति श्रुत्युदाहरणेन जीवाद्भिन्नत्वेनेश्वरः समर्थितः । तथाच जीवस्य परमात्मात्मकत्वाभावेनाज्ञत्वसंभवादधिकारी भविष्यत्येवेत्यर्थः । तथाच जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति श्रुत्या भिन्नत्वेनावगतो यो जीवस्तस्य दृशं शास्त्रसाध्यामिति शेषः । गतः प्राप्तः विषयीभूत इति मूलार्थो द्रष्टव्यः । जुष्टं जुषीप्रीतिसेवनयोः सर्वसेव्यं । अन्यं जीवाद्भिन्नं । ईशं भगवंतं ।

स्योक्तत्वाद्भिन्न एवाधिकारी सिद्धस्तथापि प्राक् प्रत्यक्षादिसिद्धो भेद इत्युक्तं तत्र प्रत्यक्षानुमाने दर्शिते । आगमप्रदर्शनायेदं श्रुत्युदाहरणं ।

अस्य महिमानं माहात्म्यं तदेतत्सत्यमिति पूर्वोक्तप्रकारेण यदा पश्यति तदा वीतशोको मुक्तो भवतीत्यर्थः ॥ भिन्न एवेति ॥ तथा च सच परमात्मात्मकश्च सर्वज्ञतया नाधिकारी स्यादिति शंकाया एवाभावेनान्यमीशमिति श्रुत्युदाहरणं व्यर्थमिति भावः ॥ इत्युक्तमिति ॥ आत्मस्वभावभेदस्य विदोषत्वेन चेत्यत्र चशब्देन प्रामाणिकत्वस्य समुच्चितत्वेन भेदस्य प्रत्यक्षादिप्रमाणसिद्ध-

त्वस्योक्तत्वादित्यर्थः ॥ **दर्शिते इति** ॥ अज्ञता चेत्यादिना जीवेश्वरभेदं प्रत्यक्षानुमाने दर्शिते इत्यर्थः ॥ **आगमेति** ॥ अन्यमीशमितिश्रुत्या स्फुटं भेदस्योक्तत्वादित्यर्थः ॥ **भिन्नत्वेनेत्यनेनेति** ॥ भिन्नत्वेनात्मसादृश्यद इति तृतीयार्धेनेत्यर्थः ॥ **प्रयोजनमिति** ॥ मोक्षरूपप्रयोजनमित्यर्थः । ज्ञानानंदादिरूपभगवत्सादृश्यात्मानंदव्यक्तेरेव मोक्षत्वादितिभावः। भिन्नत्वेनात्मसादृश्यद

भिन्नत्वेनेत्यनेन प्रयोजनं दर्शितं । तत्र भिन्नत्वेनेति स्वरूपसंकीर्तनं । सादृश्योक्त्या भेदस्य लब्धत्वात् । सदेति सादृश्यविशेषणं । प्रयोजने

इत्यत्र भिन्नत्वेन घटितं यदात्मसादृश्यं तत्प्रद इत्येवं भिन्नत्वेनेत्येतत्सादृश्य रूपप्रयोजनशरीरांतर्गतमिति प्रतीयते । अत आह ॥ **भिन्नत्वेनेति** ॥ स्वरूपसंकीर्तनमिति ॥ ननु सादृश्यरूपप्रयोजनशरीरांतर्गतमित्यर्थः। कुत इत्यत आह ॥ **सादृश्योक्त्येति** ॥ सादृश्यस्य भेदव्याप्तत्वेन व्याप्योक्त्या व्यापकस्य भेदस्य लब्धत्वेन तच्छरीरांतर्गतत्वाभावात् धूमवत्त्वोक्त्या लब्धस्य वह्नेः धूमशरीरांतर्गतत्वाभाव वदित्यर्थः । तथाच यत्र सादृश्यं तत्र भेदः यत्र भेदा-

॥५३॥ भावः तत्रसादृश्याभाव इत्येवं भिन्नत्वेनोपपाद्यमानं यदात्मसादृश्यं तत्प्रद इति मूलार्थो द्रष्टव्यः ॥ **सदेति सादृश्यविशेषणमिति** ॥ अभिव्यक्तानंदत्वादिरूपमोक्षादिसादृश्यस्य सदातनत्वरूपं विशेषणं सदेत्यनेनोक्तमित्यर्थः ॥ **प्रयोजने विप्रतिपत्तेरिति** ॥ अभिव्यक्तानंदत्वादिसादृश्यरूपमोक्षाख्यप्रयोजनस्वरूपे प्रमाणाभावेन एकविंशतिदुःखध्वंस एव मोक्ष इति केचिदाहुः । आत्महानिरित्यन्ये । संततोर्ध्वगतिरित्यन्ये । इत्येवं विप्रतिपत्तेः स्वाभिमतमोक्षरूप-

विप्रतिपत्तेर्यदा पश्य इति श्रुतिरुदाहृता । जीवदृशं गत इत्यनेनाधिकारि

प्रयोजनस्य प्रामाणिकत्वसूचनाय यदा पश्य इति श्रुतिरुदाहृतेत्यर्थः।"यदापश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं । तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति"इति श्रुतेरयमर्थः पश्यतीति पश्यो जीवः रुक्मवर्णं ॥५३॥
स्वर्णवर्णं जगत्कर्तारं अत एव ब्रह्मणश्चतुर्मुखस्यापि योनिं । ब्रह्म वेदः स एव योनिः ज्ञाप्तिकारणं यस्येति वा । ईशं समर्थं । ईशनशीलं वा । पुरुषं पूर्णषड्गुणं पुरि शेत इति पुरुषः तमिति वा। एतादृशं भगवंतं यदा पश्यते पश्यति।

तदाऽयं विद्वान् पुण्यपापे पुण्यमनिष्टं पापं च सर्वात्मना विधूय अत एव निरंजनः निर्दुष्टः सन् परमं साम्यमुपैति । दुःखाभावपरमानंदादिरूपसाम्यं सादृश्यमुपैति प्राप्नोति । यथोक्तं । दुःखाभावः परानंदो लिंगभेदः समा मतेति । मुक्तेश्वरानंदयोः साम्यं चानुकूलतया वेदनीयत्वादिरूपमेव नापरिच्छिन्नत्वादिरूपं । यथोक्तमनुव्याख्याने । अन्यानंदादिसादृश्यमानुकूल्यादिना परं । पूर्णत्वादिमहत्तेषु वैलक्षण्यं श्रुतौ श्रुतमिति ॥ अधिकारिविषययोरिति ॥ ज्ञातृज्ञेय-

विषययोः संबंधो दर्शितः । दृशं शास्त्रसाध्यामिति शेषः । तेन शास्त्रेणा-
धिकार्यादेः । सादृश्यद इत्यनेन विषयप्रयोजनयोः । तत्रापि जीवस्येति

भावरूपसंबंधो दर्शित इत्यर्थः । शास्त्रेण अधिकारिविषययोः संबंधस्य मूले सूचितत्वज्ञापनाय जीवदृशं गत इत्यनंतरं शेषं पूरयति ॥ शास्त्रसाध्यामिति ॥ तेनेति ॥ ईश्वरस्य जीवकर्तृकशास्त्रसाध्यज्ञानविषयत्वकथनेनेत्यर्थः ॥ अधिकार्यादेरिति ॥ आदिपदेन विषयग्रहणं । संबंधो दर्शित इत्यनुवर्तते । तत्र शास्त्रस्याधिकारिणा पाठ्यपाठकभावरूपः संबंधः । शास्त्रस्य विषयस्य च

ज्ञाप्यज्ञापकभावरूपः संबंधो दर्शित इत्यर्थः ॥ सादृश्यद इति ॥ आत्मसादृश्यप्रदत्वोक्त्या विषयप्रयोजनयोस्तदुदयभावरूपः संबंधो दर्शित इत्यर्थः । अधिकारिप्रयोजनयोस्संबंधस्य मूलसूचितत्वज्ञापनाय सादृश्यद इत्यनंतरमध्याहार्यमाह ॥ जीवस्येति ॥ तेनेति ॥ जीवसादृश्यप्रदत्ववचनेनाधिकारिप्रयोजनयोः प्राप्यप्रापकभावरूपसंबंधो दर्शित इत्यर्थः । नन्वतः परोमात्रयेत्यत्र अतः अद्वैतपक्षेऽधिकार्याद्यनुपपत्तेः । परो मात्रयेत्यारभ्यात्मसादृश्यद इत्यंतम-

शेषः । तेनाधिकारिप्रयोजनयोरपीति विषयाद्युपपन्नमिति वाक्यशेषः । तेनात इत्यस्य संबंधः । एवमद्वैतमते शास्त्रस्यानारंभणीयत्वप्रसंगान्नाद्वै-

नन्वितं प्रतीयते । अतोऽध्याहरति ॥ इति विषयादीति॥ वाक्यशेष इति ॥ सादृश्यद इत्यनंतरमित्यादिवाक्यरूपः शेष इत्यर्थः । परो मात्रयेत्यादिसादृश्यद इत्यंतस्य वाक्यस्य इत्यादिशेष इत्यर्थ इत्यप्याहुः ॥ तेनेति ॥ इति विषयाद्युपपन्नमित्यनेनात इत्यस्य संबंध इत्यर्थः । तथाच अत अद्वैतपक्षे विषयाद्यनुपपत्तेः । अस्मन्मते तु विषयाद्युपपन्नमित्यन्वयः । तत्प्रकारविवरणं परो मात्र-

येत्यादीति द्रष्टव्यं । अगण्यगुणत्वमगण्यगुणवत्त्वं ॥ अस्येति ॥ नारायणस्या गण्यगुणत्वोपपादनस्येत्यर्थः। मायावादेति मूलं । तस्यायमर्थः। यथा सूर्येणांधकार व्याप्तं जगत्तन्नाशेन प्रकाशितं भवति तथा सर्वज्ञसूर्येण मायावादतमसा व्याप्तं जगत् इति पूर्वोक्तप्रकारेण तत्वदृशा तत्वज्ञानेन भातं प्रकाशितं । न तेना-

तमतं सम्भवतीति युक्तमेव नारायणस्यागण्यगुणवत्त्वमुपपादितं । किम स्य प्रयोजनमित्यत आह ॥ मूलं— मायावादतमोव्याप्तमिति तत्वदृशा जगत् । भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेस्सदा ॥ एवंसमापितप्रकरणोऽपि भगवानाचार्योऽते चापि परमेश्वरप्रणामस्तवने

न्यन्मम प्रयोजनं मंतव्यमित्याशयेनोक्तं । सदा श्रीपतेः प्रीतय इति । प्रकरण-स्य निर्विघ्नेन परिसमाप्तत्वात्पुनः प्रणामो भक्तिवशादेवेति ज्ञापनाय समापित-प्रकरणोऽपीत्युक्तमिति ज्ञातव्यं । यद्वांतेऽपीत्यन्वयः मंगलादीनि मंगलमध्यानि मंगलांतानि च शास्त्राणि प्रथंते आयुष्मत्पुरुषकाणि भवंतीति वचनादित्यवगंत-व्यं ॥ प्रणामस्तवने इति ॥ प्रधानगुणभावेनेति शेषः ॥ विधत्त इति ॥

विपूर्वोदधातिः करोत्यर्थे। तथाच करोतीत्यर्थः ॥ **साद्दश्यद इत्युक्तमिति** ॥ भगवतः स्वात्मसाद्दश्यप्रदत्वोक्त्या जीवस्यात्मसाद्दश्यलाभः पुरुषार्थ इत्युक्तमिति भावः ॥ **नचायमिति** ॥ अयं जीवस्यात्मसाद्दश्यलाभो न पुरुषार्थः । वस्तुत्वादिरूपसाद्दश्यस्य सुखदुःखप्राप्तिहान्योरन्यतरत्वाभावादिति भावः ॥

विधत्ते ॥ **मूलं—नमोऽमंदनिजानंदसांद्रसुंदरमूर्तये । इंदिरापतये नित्यानंदभोजनदायिने** ॥ आत्मसाद्दश्यद इत्युक्तं नचायं पुरुषार्थ इत्येतत्परिहारायाद्यं विशेषणं । नानंदस्वरू (पमात्रेण) पेणपुरुषार्थ इत्यतो नित्यानंदेति विशेषणम् । भोजनं भोगः अनुभव इति यावत् ॥

**आद्यं विशेषणमिति** ॥ तथा चामंदोऽनल्पः पूर्ण इति यावत्। निजः स्वाभाविको य आनंदः तेन सांद्रा निबिडा मूर्तिर्देहः तदुपेतायेत्येवं देहस्यानंदात्मकत्वोक्त्या तदभिन्नस्य भगवतोऽप्यानंदात्मकत्वलाभात्तस्य स्वसाद्दश्यप्रदत्वेजीवस्याप्यानंदात्मकत्वं प्राप्तमिति भवत्येवात्मसाद्दश्यलाभो जीवस्य पुरुषार्थ इति भावः ॥ **स्वरूपेणेति** ॥ अननुभूयमानतयेत्यर्थः । समापितग्रंथो भगवांष्टीका-

कारों ऽतेऽपि मंगलमाचरति ॥ **सदा सुरेति** ॥ कमलाकमितुः पादयुगले म सदा रतिरासक्तिरस्त्वित्यन्वयः । कमला महालक्ष्मीः तस्याः कमितुः कमुकांतौ कांतिरिच्छा । तथाच कामुकस्येत्यर्थः । पत्युरिति यावत् । कामुके कमितानुक इत्यभिधानात् । कमलापतेर्दक्षिणसव्यपादयोः क्रमेणानंदज्ञानप्रदत्वात् तदुभयप्रार्थनाय पादयुगल इत्युक्तं । यथोक्तंबृहदादण्यकभाष्ये । " सुवरिति । प्रतिष्ठति आभ्यामिति प्रतिष्ठा पादौ द्वे एते अक्षरे अक्षर इत्यत्र स्वित्यानंदः

सदा सुरशिरोरत्नप्रभामोषिनखत्विषि । कमलाकमितुः पादयुगले रतिर-

समुद्दिष्टो वरिति ज्ञानमुच्यते । मोक्षदानेन तद्दानात्सुवरस्य पदद्वयं । दक्षिणश्चैव सव्यश्च" इति । कथं भूते पादयुगले इत्यत उक्तं । सुरशिरोरत्नेति । सुराणां शिरांसि सुरशिरांसि सुराशिरस्सुस्थितानि रत्नानि सुरशिरोरत्नानि सुरशिरोरत्नानां प्रभा सुरशिरोरत्नप्रभा सुरशिरोरत्नप्रभां मुष्णाति मुषस्तेये तिरस्करोतीति

यावत् । इति सुरशिरोरत्नप्रभामोषिणी। नखानां त्विट् नखत्विट् । त्विट्कांतौ। सुरशिरोरत्नप्रभामोषिणी नखत्विट् यस्य तत् । सुरशिरोरत्नप्रभामोषिनखत्विट्। तस्मिन् सुरशिरोरत्नप्रभामोषिनखत्विषि । त्विट् त्विषी त्विंषीति षकारांतनपुंसकलिंगः त्विट्शब्दोऽयं । सप्तमीति ज्ञातव्यं । रतिरासक्तिर्भक्तिरिति यावदित्यशेषमितिमंगलं ॥ ❀ ॥ यादवाचार्यहृत्पद्मगतश्रीमध्ववल्लभः । प्रीयतामनया

स्तु मे ॥ ❀ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिततत्वप्रकाशिकाख्य उपाधिखंडनविवरणं श्रीमज्जयतीर्थभिक्षुविरचितं संपूर्णम् ॥

ग्रंथकृत्या व्यासो दयानिधिः। विघ्नध्वांतनिवारणैकतरणिर्विघ्नाटवीहव्यवाड्विघ्नव्यालकुलोपमर्दगरुडो विघ्नेभपंचाननः। विघ्नोत्तुंगगिरिप्रभेदनपविर्विघ्नाब्धिकुंभोद्भवो विघ्नाघौघघनप्रपंचंडपवनः पायात्प्रसादो गुरोः॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन रचिता तत्वप्रकाशिकापरपर्यायोपाधिखंडन

व्याख्याविवृतिः संपूर्णा ॥ ❀ ॥ श्रीकृष्णार्पणमस्तु ॥

अयं ग्रंथः कुंभघोणस्थमध्वविलासपुस्तकालयाधिपानां पंडित, टी. आर्. कृष्णाचार्याणां पुत्रेण टी. के. वेंकोबाचार्येण कुंघोणस्थे "श्रीविद्यामुद्रणयन्त्रे" मुद्रापयित्वा प्रकाशितः ।

शके १८५१. शुक्लनामसंवत्सरे । सन् १९२९.



इति श्रीमदानंदतीर्थभगत्पादाचार्यविरचितम्

उपाधिखंडनम् ।

श्रीमत्पद्मनाभतीर्थकृतया टीकया–श्रीमज्जयतीर्थ

विरचितया टीकया–श्रीनिवासतीर्थ

विरचितया तट्टिप्पण्या च युतम् ॥